* श्रीः *

महाकविश्रीमदम्बिकादत्तव्यासविरचितं

# गुप्ताशुद्धिप्रदर्शनम्

तथा

प्राचीनकविकृताद्भुतकूटकाव्यरूपम्—

# व्युत्पत्तिप्रदर्शनम्

सर्वविधपरीक्षोपयुक्त

सरल-दर्पण-व्याख्यासहितम्

व्याख्याकारः—

पं० श्रीजितेन्द्रियाचार्यः

मूल्यम्

आणकाष्टकम् ।

छप गई ! छप गई !! छप गई !!!

# ❀ शुक्लयजुर्वेदीय मन्त्रसंहिता ❀

सम्पादक—वेदाचार्य पं० श्रीवेणीराम शर्मा गौड़, काशी

मन्त्र संहिता कर्मकाण्डियों के लिए कितने उपयोग की वस्तु है यह किसी से छिपा नहीं है। उन लोगों के लिए विशेष रूप से उपयोगी है जो समस्त शुक्ल यजुर्वेद संहिता न पढ़ कर केवल कर्मकाण्डोपयोगि आवश्यक मन्त्रों को कण्ठस्थ कर अल्प समय में ही कर्मकाण्ड प्रक्रिया में पूर्ण निपुणता प्राप्त करना चाहते हैं।

इस पुस्तक में ५२३ चुने हुए मन्त्र और लक्षण सहित जटाद्यष्ट विकृतियाँ भी दे दी गई हैं। साथ ही वैदिक साहित्य का सरल ढंग से परिचय कराने के लिए प्रारम्भ में ९६ पेज की विशद भूमिका हिन्दी में लिखी गई है।

मन्त्र संहिता का यह संस्करण कर्मकाण्डियों और पुरोहितों के लिए बहुत ही उपयोगी सिद्ध हुआ है। जो लोग थोड़े में वैदिक-साहित्य का परिचय प्राप्त करना चाहते हैं उनके लिए इससे बढ़ कर दूसरी कोई पुस्तक नहीं है। संस्करण शुद्ध और प्रामाणिक है। बढ़िया कागज़, छपाई सुन्दर, मूल्य तीन रुपया।

## ❀ सामवतम् ❀

पं० अम्बिकादत्त व्यासजी ने यह नाटक एक पौराणिक कथाके आधार पर संस्कृत में लिखा है। इसमें व्यासजी की विलक्षण कल्पना, अनुपम कवित्व, सरल और मुहावरेदार संस्कृत पर असाधारण अधिकार तथा सरसता निखर पड़ी है। संस्कृत के नाटकों में इसका स्थान ऊँचा है। शिवराज-विजय के टीकाकार पं० रामजी पांडेय की विस्तृत टीका के साथ प्रकाशित। मूल्य दो रुपया आठ आना।

सर्वविध पुस्तक-प्राप्तिस्थान—व्यास पुस्तकालय, मानमंदिर, काशी।

महाकविश्रीमदम्बिकादत्तव्यासविरचितं—

# शुद्धाशुद्धिप्रदर्शनम्

## ( पण्डित पच्चार )

प्राचीनकविकृतकूटकाव्यरूप—

व्युत्पत्तिप्रदर्शन-

समन्वितम् ।

पं० श्रीजितेन्द्रियाचार्यप्रणीत—दर्पणव्याख्या—सहितम् ।

प्रकाशकः—

श्रीकृष्णकुमार व्यासः,

व्यासपुस्तकालयः,

मानमन्दिरं, काशी

पञ्चमं संस्करणम् ( परिवर्द्धितं )

सं० २००५

मूल्यम्— द्वादशाणकाः

सर्वविधपुस्तकप्राप्तिस्थानम्—
व्यासपुस्तकालयः,
मानमन्दिरम्, काशी।

# अस्य पुस्तकस्य विषयानुक्रमणिका



दुर्गा प्रेस, ढुण्ढिराज, बनारस।

# निवेदन

ऐसे ऐसे लेख तो अनेक दीख पड़ते हैं जिनमें किसी में क्रिया गुप्त हो किसी में कर्म गुप्त हो, पर ऐसे लेख नहीं देखने में आते जिनमें कुछ अशुद्धि हो और गुप्त हो। सच पूछिये तो क्रिया गुप्तादि उतनी व्युत्पत्ति की अपेक्षा नहीं रखते जितनी अशुद्धि गुप्त! जिसको उणादि और धातु के विभिन्न प्रयोगों में अभ्यास है, वह क्रियागुप्तादि का मर्म समझ लेगा, पर अशुद्धिगुप्त को समझने के लिए तो सच्ची व्युत्पत्ति चाहिये। फिर यह भी है कि क्रिया आदि न बूझ सकने से पाण्डित्य की उतनी हानि नहीं है जितनी अशुद्ध बोलने और अशुद्ध को शुद्ध समझने में है। इन दिनों भी स्थान-स्थान में सहस्रों हीं छात्र पढ़ते हैं और उनके अध्यापक लोग फांकी और खरों के मारे उनके पेट में पानी-पानी कर देते हैं, पर जिस सूत्र पर छ घण्टे शास्त्रार्थ करने का सामर्थ्य उनको हो जाता है, उसी सूत्र के उदाहरण प्रायः स्वयं भी अशुद्ध बोलते हैं और दूसरे अशुद्ध बोलें तब तो खटके ही क्यों! कुछ तो संस्कृत भाषा ही ऐसी दुरूह है कि बड़े बड़ों को भी भरमा देती है; पर प्रधान बात यही है कि इन दिनों पठन-पाठन ऐसा नष्ट हो रहा है कि जिन छात्रों की जिह्वा पर भाष्यान्त व्याकरण नाचता है वे भी 'क्या खाके आये हैं' यह भी सुन्दर शुद्ध संस्कृत में नहीं कह सकते और अपने मित्र को चार पंक्ति में भी लिख कर अपना अभिप्राय नहीं प्रगट कर

सकते। जो कुछ हो, इस छोटे से प्रबन्ध में संस्कृत भाषा के कुछ वाक्य हैं और प्रत्येक में कुछ अशुद्धियाँ हैं, छात्रों को उचित है कि जहाँ तक हो सके अपने से उन अशुद्धियों को ढूँढ़ें, नहीं तो अपने गुरुजी से पूछें, और गुरु लोगों को भी उचित है कि छात्रों से व्युत्पत्ति सम्बन्धी अभ्यास कराते रहें।

वैयाकरण लोग कटकटा के कमर बाँधें तो संसार के सब अपशब्दों को भी शुद्ध कर ले सकते हैं जैसे कहावत प्रसिद्ध है कि "उणादि का प्रत्यय आया डलक, डियाँ, डोलना, मा धातु से सिद्ध हुआ मलक, मियाँ मोलना।" पर हमें विश्वास है कि हमारे इष्ट-मित्र लोग इस अजीर्ण पण्डिताई का प्रच्छर्दन न करेंगे और हमारे तात्पर्य पर ध्यान देंगे।

यह क्षुद्र ग्रन्थ एक बार संवत् १९३७ में छपा था, छात्र और पण्डितों के आग्रह से फिर प्रकाशित करना पड़ा।

वैशाख ३०, सं० १९५० } विद्वज्जन किङ्कर
भागलपुर } अम्बिकादत्त व्यास

# प्रस्तावना

अयि सुरसरस्वत्यै स्पृहयालवो दयालवः !

श्रीमतां सेवायां 'व्युत्पत्तिप्रदर्शन' सहचरितं 'गुप्ताशुद्धिप्रदर्शनं' समुपनेतुमतिवेलं हृष्यति नोऽन्तरङ्गम्। अस्य च प्रणेता सुगृहीतनामा सरसललितकाव्यकलाकलापालयो दर्शनेष्वप्यव्याधगतिः शिवराजविजयप्रमुखप्रत्यग्रकृतिकृती स्व० श्रीमदम्बिकादत्तव्यासः। केवलं गुप्ताशुद्धिप्रदर्शनं प्रागपीतोऽवाप्तात्मप्रकाशमाच्छात्रपण्डितवृन्दं सोल्लासं परिगृहीतञ्च। अत्र हि कविनाऽधीतव्याकरणानन्तेवासिन उपचिकीर्षुणा वैयाकरणविदुषान्त्वन्तरङ्गरङ्गे कौतुकतरङ्गानुत्पिपादयिषुणा च च्युतसंस्काराणि पदानि विहितसंस्कारायमाणानि वैदग्ध्येन वाक्यघटकीकृतानि। अनया च भङ्ग्या कौमुदीयानुशासनस्फोरणे तन्मुखेन च संस्कारस्खलितप्रयोगपरिहापणे कवेस्तात्पर्यम्। इदमेवाऽभिसन्धाय करतलामलकीकृतशब्दप्रपञ्चैर्भट्टिप्रभृतिभिर्भट्टिकाव्यादिनाम्ना बृहती सहृदयहृदयग्राहिणी रचना प्रादुरभावि। अयं विशेषः—तत्र हि कृतसंस्काराण्येव तत्तद्विधिनिषेधलक्ष्यतार्हाणि व्याकरणप्रकरणसर्वाङ्गीणव्युत्पत्त्याधायकानि पदानि रामायणीयवृत्तप्रतिपादनायोपात्तानि-इत्युपादेयत्वेन संग्रहेलिमानि तानि नितान्तप्रौढानि। अत्र तु संस्कारहीनपदघटितानि कतिचिदेव वाक्यानि यत्किञ्चित्प्रबन्धानिबद्धत्वात्परस्परनिरपेक्षाणि हेयत्वेनापि परिज्ञेयानि—इति। व्याकरणाध्ययनस्य परमं चरमं च फलं शुद्धाशुद्धशब्दविवेचनं खलु सर्वसम्प्रतिपन्नम्। अत्रानवदधतां विगानं श्रूयते किल—

"गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः।
दुःप्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति॥" (गौः=वाक्)

परमद्यत्वे बहवोऽभिरूपतल्लजा अत्रैवं प्रौढिवादं विदधति यत् 'बृहस्पतिर्वक्ता, इन्द्रस्त्वध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, तदाऽपि नान्तं जगाम'

इति महाभाष्यप्रघट्टकेन साकल्येन शब्दप्रपञ्चपरिज्ञानस्यासम्भवत्वाख्यानात् सदसत्प्रयोगविवेको यज्ञादिषु ऋत्विगादीनामेवापरिहार्यः, अन्यत्र तु तदनवधानमपि सुमर्षणम्; नान्तरीयकत्वात्' इति। परे परीक्षकाः प्रेक्षावन्त इदं न क्षमन्ते; भाष्यप्रकरणपर्यालोचनापर्यवसितं निष्कृष्टार्थमेवं विवृण्वते यत्— 'व्याकरणे कृतश्रमेण पर्यालोडितप्रबन्धसर्वस्वेनापि तत्र कृतकृत्यबुद्धिर्न विधेया, अनवधिः शब्दविस्तर इत्येव; न पुनः प्रयोगे कामचारोऽपि क्षम्य' इति। इदमेवाभिसन्धाय प्रणीतेऽस्मिन् क्षोदिष्ठे पुस्तके दशश्लोका एकादशोत्तरशतवाक्यानि च निबद्धानि। तत्र सर्वेष्वपि वाक्येषु संस्कारच्युतिर्वर्तते। सेयं संस्कारच्युतिस्तिसृषु श्रेणीषु विभाजकतावच्छेदकत्रैविध्याद् व्यवस्थापनीयतामर्हति।

१ स्वरूपतो शब्दे व्याकरणसंस्कारवैधुर्यरूपा। २ अमराद्यननुशिष्टलिङ्गात्मिका। ३ स्वतो विहितसंस्कारस्यापि शब्दस्य समभिव्याहृियमाणपदान्तरसंसर्गजसंस्कृतिच्युतिरूपा। प्रदर्शितदूषणत्रिकस्यापि च्युतसंस्कारताविशेषेऽपि प्रतिपत्तिसौकर्याय निरुक्तवैलक्षण्यमादाय चायं विभागोऽनुसन्धेयः।

यद्यप्यत्रत्यसमस्तदोषेषु वैयाकरणानां सम्प्रतिपत्तिर्न दृश्यते। तथाहि-समासान्तविधिमात्रस्यानित्यता परिभाषेन्दुशेखरे सोहापोहं महत्याऽऽरभट्या प्रतिपादिता। तदनुसारेण भासो दूतवाक्ये 'उत्सादयिष्यन्निव सर्वराज्ञः' इति प्रायुङ्क्त, एवं शूद्रकोऽपि 'न गर्दभा वाजिधुरं वहन्ति'। उभयत्र 'राजाहःसखिभ्यष्टच्' 'ऋक्पूरब्धूःपथामानक्षे' इति विहितसमासान्त उपेक्षितः, तथा चेहाप्यकृतसमासान्तत्वरूपाशुद्धिघटितवाक्योदाहारोऽकिञ्चित्करः। एवं २९ तमे वाक्ये वतिप्रत्ययानुपपत्तिराशङ्किता; साऽपि यथास्थित एव वाक्ये सुसमाधा। यतोहि 'अस्तिर्भवन्तीत्यप्रयुज्यमानोऽपि प्रयुज्यत' इत्यभिहितत्वात् 'सन्' इति प्रश्लिष्य तन्निरूपितसादृश्यस्य सुसम्पादत्वात्, 'चिखण्डयिषती' त्युपात्तक्रियानिरूपितसादृश्यस्यैव वा सुलभत्वात्—इत्यादि। तथाऽपि ग्रन्थकार ईदृशाशङ्कासमाधानोत्थापनद्वाराऽपि बुभुत्सूंस्तत्तत्प्रकरणं स्फोरयन् नूनं फलेग्रहियत्नः।

परं दृढप्रौढिपरिवृढानामप्यत्रत्यदोषविषयेऽसम्भावनाविपरीतभावनादिक-

मालक्ष्य समेषां दोषाणां समुद्धरणाय प्रचुरप्रतीहारेषु भ्रान्त्वाऽपि नितान्तमव-केशिभ्रमणैरस्माभिः प्रार्थिताः सर्वतन्त्रस्वतन्त्रा दार्शनिकसार्वभौमादि-विविधपदवीविराजमानाः प्रतीच्यप्रवरश्रीगोस्वामिदामोदरशास्त्रिचरणाः समुददीधरन् कार्त्स्न्येन दोषानिमान्। तदिदं ग्राहं ग्राहं काचिद् लघीयसी व्याख्याऽनेनोन्मेषिता। एतत्प्रकाशनावसरे गुरुचरणानां वृन्दावनगमनेना-त्रानुपस्थित्याऽऽपतिताः काश्चित् त्रुटयः पाठकैः सकृपमित्थं समुत्सारणीयाः—

२६ तमविवरणे 'समापृच्छमानः' इत्यपेक्षितम्, (सीसकाक्षरयोजककृ-रजं स्खालित्यमिदम्)। ३७ तमवाक्यविवरणे 'स्वाङ्गाच्चेतः' इत्यनेन पुंवद्भाव-प्रतिषेधे—। ३९ तमवाक्यविवरणे 'द्वित्रिचतुर्भ्यः सुच्' इत्यनेन कृत्वसुजपवा-दभूतः 'सुच्' भवति इति काङ्क्षितम्। ४४ तमवाक्य 'आददाति' इतीद-मप्यसाधु; 'आङो दोऽनास्यविहरणे' इत्यनेन परस्मैपदनिषेधात् 'आदत्ते' इति वरीयः। ५० तमवाक्ये 'पादस्य पदाज्यातिगोपहतेषु' इत्यनेन 'पद' इत्यदन्तादेशविधानात् 'पदोपहतो' इति प्रयोक्तुं साम्प्रतम्। ५२ तमविवरणं 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूप' इत्यादिना समानस्य सादेशविधानात् 'सरूपौ' इत्युचितम्। ६८ तमवाक्ये 'गर्हायाञ्च' इत्यनेन 'सेवेथाः' 'चुम्बेः' इति लिङ्प्रयोगावपेक्षितौ। ७६ तमवाक्यविवरणमीदृगपेक्षितम्—'तृजकाभ्यां कर्तरि' इत्यनेन तृजन्तेन 'कर्तृ' पदेन समासनिषेधः प्रसज्ज्यते, 'ग्रन्थप्रणेता' 'त्रिभुवनविधातुश्च' इत्याद्यभियुक्तप्रयोगस्तु शेषषष्ठ्या कथञ्चिद् निर्वाह्यः। ८३ विवरणे 'निनतया' इत्यत्र 'निम्नतया' इति विवक्षितम्। ८७ तमवाक्ये 'समगामि' इतीदं नाशुद्धम्। ९० तमं वाक्यं वर्णविन्यासवैकल्याद् भ्रामकं प्रतिभाति—'अग्निसन्तप्त' मित्यपेक्षितम्। १०३ तमविवरणे 'सिषेविषते' इत्य-पेक्षितम्। २२ पृष्ठे 'दशवार्षिकी' इतीदमप्युत्तरपदवृद्ध्या सेद्धुमर्हति—इति।

व्युत्पत्तिप्रदर्शनम्—द्वितीयेऽस्मिन् परिच्छेदे प्राचीनानि कतिचिदु-द्भटकूटपद्यानि दर्पणाख्यव्याख्यया समन्वाय्य प्रकाशितानि। अत्रास्माभिः कुवलयानन्दचम्पूभारतकविकण्ठाभरणविदग्धमुखमण्डनसुभाषितभाण्डागारे-भ्योऽभिमतानि चित्रलक्षणाक्रान्तानि पद्यानि समाहृतानि। अत्र प्रथमादि—

सप्तविभक्तिगुप्त - सम्बोधनगुप्त-सन्धिगुप्त - समासगुप्त - लिङ्गगुप्ताशुद्धिगुप्त-क्रियागुप्त-कूटाख्यानि चतुर्दश प्रकरणानि विहितानि।

काव्यं लिलक्षयिषतामालङ्कारिकाणां भूयस्त्वेऽपि प्रायेण सर्वोपजीव्यानां श्रीमम्मटभट्टानां मतेऽयं कूटप्रपञ्चश्चित्रकाव्येऽन्तर्भावमर्हति। 'शब्दचित्रमर्थचित्रमव्यङ्ग्यं त्ववरं स्मृतम्' इति तल्लक्षणात्। 'अव्यङ्ग्यमि'त्यत्र नञः 'अनुदरा कन्या' इत्यत्रेवेषत्त्वमर्थः। 'स्फुटप्रतीयमानरहितमिति काव्यप्रकाशवृत्तिः', तथा च यत्र क्वचिद् व्यङ्ग्यप्रतिभासेऽपि चित्र एव सहृदयहृदयविश्रान्तेर्न व्यङ्ग्यत्वव्यवहारः। अथवा समासोक्त्याद्यलंकारप्रधानकाव्यानां गुणीभूतव्यङ्ग्यत्वचित्रत्वयोरविरोधात् तत्र तत्र तत्तादृगलंकारप्रधानत्वं वाऽभ्युपेयम्। 'पर्यायोक्तसमासोक्त्यादिप्रधानकाव्यानां गुणीभूतव्यङ्ग्यतायाश्चित्रतायाश्च सर्वालंकारिकसम्मतत्वात्' इति रसगङ्गाधरे पण्डितराजजगन्नाथोक्तेः। 'समरे' इत्याद्युदाहरणेषु 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्' इति लक्षणलक्षितपर्यायोक्तालंकारस्योपलम्भात्। कृतं प्रसक्तानुप्रसक्तवृंहणेन।

यद्यपि कूटानां स्फोटनमपि नार्वाचीनम्, परं स्फुटितेऽपि कूटे तत्सङ्गमनं प्रायेण व्याख्यासापेक्षमित्यक्षमेणापि जनेनानेन यथाप्रेक्षं तत्र प्रावर्ति। तत्र सव्याख्यो भूयानंशः समाविवेशयिषितोऽपि पत्राणां दौर्लभ्यमहार्घतासंयन्त्रितत्वादिपारवश्येन पर्यहारि।

एतत्सम्पादनावसरेऽस्माभिरुपस्तुतास्तत्रभवन्तो वैयाकरणमूर्धन्याः पण्डितप्रवरश्रीगणपतिशास्त्रिमोकाटेमहाशया हृदयेशयविशयचयान् व्युदस्य सत्परामर्शैर्नान्वगृह्णन्निति ससाधुवादं कृतज्ञतां शिरसा बिभृमस्तेषाम्।

पर्यन्ते च सर्वसूत्रधारं भूतभावनं निर्भरं भावयन् मुकुलिताञ्जलि प्रणिपतन्नन्तर्वाणीश्च विरमति भूरिपल्लवनाद्—

विजयादशमी वि० २००५
१५।८ मानमन्दिरम्
वाराणसी।

सुधीविधेयो
जितेन्द्रियाचार्यः

महाकवि

श्रीमदम्बिकादत्तव्यासप्रणीतं

# गुप्ताऽशुद्धिप्रदर्शनम्

—✻—

❁ श्लोकाः ❁

त्वयि त्रातरि भो कृष्ण ! दुखं नोऽत्राऽस्ति किञ्चन ।
इयं सहप्रणतिना कृता ते चरणेऽञ्जलिः ॥ १ ॥
हितैषां जगतो धत्सि लक्ष्मी ते पादपीठिका ।
नित्यस्ते मे च सम्बन्धो पिता त्वं ते सुतोऽस्म्यहम् ॥ २ ॥

---

प्रपन्नजीवजातस्य जीवातुं भवभेषजम् ।
मङ्गलायननामानं जानकीजानिमानतः ॥
विश्वविश्रुतवैदुष्यान् गोस्वाम्युपपदाञ्चितान् ।
दामोदरार्यकृतिनो नमामि प्रश्रितो गुरून् ॥
गुप्ताशुद्धेषु वाक्येषु गुरूपज्ञां समुद्धृतिम् ।
व्याख्याविन्यासमात्रेण तनोति श्रीजितेन्द्रियः ॥

१ अत्र 'तौ युतावञ्जलिः पुमान्' इत्यमरानुशासनात् अञ्जलिशब्दस्य पुंस्त्वेन तद्विशेषणस्येदंशब्दस्यापि पुंस्त्वौचित्यात् 'अयम्' इति, एवमेव 'कृतः' इत्यप्यपेक्षितम् । किञ्च प्रणतिशब्दस्य क्तिन्नन्तत्वेन स्त्रीत्वौचित्यात् 'प्रणत्या' इत्यावश्यकम् ।

२ इच्छेति निपातनात् 'हितेच्छाम्' इति वक्तुं युक्तम् । किञ्चाङ्यन्तत्वेन सुलोपाभावात् 'लक्ष्मीस्ते' इति प्रयोक्तुमुचितम् । किञ्च 'धत्से' इत्युचितम् ।

तन्त्री करे यस्य सरत्वां सदा गायति नारदः ।
ऋषिभिर्महिमा दिव्या ते सदा ब्रूयते मुदा ॥ ३ ॥

यस्य ध्वजायां गरुडो भुजायां स्वर्णकङ्कणः ।
कण्ठे च कौस्तुभं भाति स मय्यनुगृहिष्यति ॥ ४ ॥

त्वां याचितं मया यद् यद् देहि तन् मां लघु प्रभो ।
हे नाथ ! मेऽखिलान् पापान् क्षमस्व जगदीश्वर ॥ ५ ॥

जगत्यस्मिन् महद्घोरे गुरौ दुःखप्रदातरि ।
निरालम्बोऽस्मि पतितः क्वास्ति ते चरणं तरिः ॥ ६ ॥

---

३ तन्त्रीशब्दस्याप्यङ्यन्तत्वात् सुलोपोऽनुचितः । 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इत्यनेन सुलोपे 'स त्वां' इत्येवोचितम् । तथा महिमन्शब्दस्य पुल्लिङ्गत्वात्तन्निघ्नस्य दिव्यशब्दस्यापि पुंस्त्वावश्यकतया 'दिव्यस्ते' इत्यपेक्षितम् । किञ्च ब्रुव आर्धधातुके वचादेशापरिहार्यतया 'उच्यते' इति युक्तम् ।

४ 'केतनं ध्वजमस्त्रियाम्' इत्यमरेण स्त्रीत्वनिषेधात् 'ध्वजे' इत्येव वक्तुं युक्तम्, एवं 'कङ्कणं करभूषणम्' इत्यमरेण नपुंसकत्वोक्त्या 'कौस्तुभो मणिः' इत्यनेन पुंस्त्वोक्त्या च 'स्वर्णकङ्कणम्' 'कौस्तुभ' इति प्रयोक्तुमुचितम् । किञ्च 'ग्रहो लिटि दीर्घः' इत्यनेन दीर्घे 'ग्रहीष्यति' इति न्यायः ।

५ याचेर्दुह्यादित्वेनाप्रधाने कर्मणि प्रत्ययौचित्यात् 'त्वं याचितो' इति प्रयोक्तुमुचितम् । एवं 'पापं किल्बिषकल्मषम्' इत्यमराभिधानात् नपुंसकत्वावश्यकतया 'मेऽखिलं पापं' इति समीचीनं स्यात् ।

६ 'आन्महतः समानाधिकरणजातीययोः' इत्यनेनाऽऽत्वे 'महाघोरे' इत्युचितम् ।

त्वमेवात्र समागच्छ मा वा त्वन्निकटे नय ।
अहं देव ! त एवाऽस्मि दुःखसङ्घात् प्रमोचय ॥ ७ ॥
न कोऽपि मित्रस्त्वद्दते यो गापयति नारदम् ।
त्वमेव प्रीतिपात्रोऽसि मा भैः कस्ते विना वदेत् ॥ ८ ॥
जाजप्यन्ते नाम तव सर्वोपनिषदः सदा ।
स्मृतीतिहासास्तेष्वेव चाचर्यन्ते बुधोदिताः ॥ ९ ॥
पद्मगन्धं मुखं दृष्ट्वा बाहू चाजानु लम्बिते ।
तवैव शरणं यामि दयस्व यदि रोचते ॥ १० ॥

---

७ 'मा वा' 'त एव' इत्युभयमपि न साधु। 'अनुदात्तं सर्वमपादादौ' 'न च वाहाहैवयुक्ते' इत्याभ्यां पादादौ चादिपञ्चकघटकैवकारयोगे च 'मा' 'ते' इत्यादेशप्रतिषेधात् 'मां' 'तवैवास्मि' इति वक्तुमुचितम्।

८ सुहृद्वाचिमित्रशब्दस्य पात्रशब्दस्य च 'मित्रं सखा सुहृत्' 'योग्यभाजनयोः पात्रम्' इत्यमरानुशासनात् नपुंसकत्वावश्यकतया 'मित्रं' 'प्रीतिपात्रं' इति प्रयोक्तुमुचितम्। किञ्च लुङि विहितस्य सिचः श्रवणावश्यकतया 'भैषीः' इत्यपेक्षितम्। एवं विनायोगे 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्'त्यनेन विहितविभक्तीनामेवौचित्यात् षष्ठी न युक्ता।

९ 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' इत्यनेन लुपादिभ्यो धात्वर्थगर्हायामेव यङो विधानाद् उपनिषत्कर्तृकभगवन्नामकर्मकजपस्याऽऽदरपूर्वकत्वाद् यङ् नोपपद्यते, 'भृशं जपती'ति भवितुमर्हति। एवं पूर्वार्धगतनामपरामर्शिसर्वनाम्नः 'तेष्वि' त्यस्य बहुवचनान्तत्वमपि न समीचीनम्। परामृश्यस्यैकवचनान्तत्वात्। किञ्चोत्तरार्धे 'चाचूर्यन्ते' इत्यपि च्युतसंस्कृतिकम्। 'चरफलोश्च' इत्यनेनोत्वे 'चञ्चूर्यन्ते' इत्येवोचितम्।

१० 'गन्धस्येदुत्पूतिसुरभिभ्यः' इत्यनेनेत्वे 'पद्मगन्धि' इति वक्तुमुचितम्।

---

## अथ गुप्ताऽशुद्धिवाक्यानि—

१ वाङ्मनोतीताय ब्रह्मणे नमः ।

२ वाक्स्तम्भनमन्त्रोऽस्माभिर्जाप्यः ।

३ स्त्रीपुंसोः स्नेह एव सर्वसुखेभ्यो विशिष्यते ।

४ सकुटुम्बाय ते स्वस्ति ।

५ यो राजा शत्रुं न विजगीषति स कातर इत्युच्यते ।

६ नौ देहि पुस्तकमेतत् ।

७ एषा दशदिवसानन्तरं पुत्रं प्रसोष्यते ।

---

१ 'अचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः' इत्यनेनाजन्ततया निपातनाद् 'वाङ्मनसातीताय' इत्येव वक्तुमुचितम् ।

२ 'जाप्य' इत्यत्र 'पोरदुपधादि'त्यनेन ण्यतोऽपवादभूतो 'यत्' भवति, अतो वृद्धेरप्रसक्त्या 'जप्य' इत्येव वक्तुं युक्तम् ।

३ 'अचतुरसुचतुरस्त्रीपुंसे'त्यादिनाऽजन्तत्वेन निपातनात् 'स्त्रीपुंसयोरि'त्येव साम्प्रतम् ।

४ 'प्रकृत्याशिषि' इत्यनेन प्रकृतिभावविधानात् 'सहकुटुम्बाय' इत्येवोचितम् ।

५ 'विपराभ्यां जेरि'त्यनेन विपूर्वकस्य जेरात्मनेपदविधानात् ततश्च 'पूर्ववत्सनरि'त्यनेन सन्नन्तस्याप्यात्मनेपदत्वमुचितम् ।

६ 'अनुदात्तं सर्वमपादादा'वित्यनेन पादादौ 'नौ' इत्यादेशानर्हत्वात् 'आवाभ्यां' इत्युचितम् ।

७ 'संख्यापूर्वो द्विगुरि'त्यनेन द्विगुत्वे 'द्विगोः' इत्यनेन च ङीपि 'दशदिवस्यनन्तरमि'ति वक्तुं साम्प्रतम् ।

८ योऽद्य विहरति स एव तदाऽपि अविहरत्।
९ एतस्य भूषणं मुष्णीहीति मा वोचः।
१० भवान् कदानीं यास्यति ? मया तु परश्वो गमिष्यते।
११ रे ! क्रोष्टः किमिति रोरवीषि ?
१२ चिररात्राय लालनपालनतत्परौ मातृपितरौ को न सुस्मूर्षति।
१३ युष्माकं गृहा जीर्णाः सन्ति, अनयोर्गृहौ तु नूतनौ स्तः।
१४ कैषाऽप्सरा नृत्यति गानसक्ता ?
१५ किमित्यस्या वधोः केशेषु मलीमसता विभाव्यते।
१६ आर्यावर्ते स्त्रियः प्रायशः स्वपत्या समं बहिर्न पर्यटन्ति।

---

८ 'अविहरत्' इत्यत्र अट उपसर्गोत्तरमुचिततया 'व्यहरत्' इति भाव्यम्।
९ 'हलः श्नः शानज्झौ' इत्यनेन हेः शानचि 'मुषाण' इत्युचितम्।
१० 'गमेरिट् परस्मैपदे' इत्यनेन परस्मैपद एवेटः प्राप्तिः। आत्मनेपदे तु 'गंस्यते' इत्येवोपपन्नम्।
११ 'तृज्वत्क्रोष्टुः' इत्यनेनासम्बुद्धावेव तृज्वद्भाव विधानात् सम्बुद्धौ तदप्राप्त्या 'ह्रस्वस्य गुणः' इत्यनेन गुणे 'क्रोष्टो' इत्येव भवति।
१२ 'आनङ् ऋतो द्वन्द्वे' इत्यनेनानङि 'मातापितरौ' इत्युचितम्। किञ्च 'ज्ञाश्रुस्मृदृशां सनरि'त्यनेनात्मपदे 'सुस्मूर्षते इत्युचितम्।
१३ 'गृहाः पुंसि च भूम्न्येव' इत्यमराभिधानाद् द्वितीयवाक्ये 'गृहाः' इति सबहुवचनान्तस्वसम्बन्धिपदं प्रयोक्तुमुचितम्।
१४ 'स्त्रियां बहुष्वप्सरसः' इत्यमरप्रामाण्याद् बहुवचनमपेक्षितम्। यद्यपि महाकविकालिदासेन शाकुन्तले 'मेनका नामाप्सराः' इति प्रायुज्यत। इदमपि तत्सम्पादकानामेवापकज्ञानविजृम्भितं भवेत् इति मन्यन्ते मनीषिणः।
१५ 'आण्नद्याः' इत्यनेन आडागमे 'वध्वाः' इत्येव भवति।
१६ 'पतिः समास एव' इत्यनेन समासे घिसंज्ञायां 'आङो नाऽस्त्रियाम्' इत्यनेन च नाभावे 'स्वपतिना' इत्येव स्यात्।

१७ एते जम्बूफलानि विक्रीणन्ते ।

१८ भवानेतानि किमिति न परिक्रीणाति ? ।

१९ भवता पश्यताम्—पाठशालायां छात्राः पठन्ति ।

२० एते छात्रा विशदं संस्कृतबोधं बिभ्रन्ति ।

२१ सुतरां शास्त्राणि पाठं पाठं कः को न सुखमबिभ्रत् ।

२२ पटोलस्य फलं मूलं छदं च रोगमवहन्ति ।

२३ यस्तव गृहं परिष्करोति स एव मद्गृहमपि प[illegible]कार ।

२४ स द्वौ श्लोकौ विरच्य प्रेषितवान् ।

२५ सूर्यः सदैवोष्णीभूतो भ्राम्यति ।

---

१७ 'आत्मनेपदेष्वनतः' इत्यनेन झस्य अति 'विक्रीणते' इत्येवोचितम् ।

१८ 'परिव्यवेभ्यः क्रियः' इत्यनेन परीत्युपसृष्टस्य क्रिय आत्मनेपदविधानात् 'परिक्रीणीते' इत्येव युक्तम् ।

१९ पश्यादेशनिमित्ताभावात् लोटि 'दृश्यताम्' इत्युचितम् ।

२० 'अदभ्यस्तात्' इत्यनेन झस्य अति'बिभ्रति' इत्येवोचितम् ।

२१ कस्कादिपाठात् नित्यं सुटि 'कस्को' इत्युचितम् । यद्यपि श्रीभट्टनारायणेन वेणीसंहारे पञ्चमेऽङ्के 'कः कोऽत्र भोः' इति प्रयोगः कृतः । अयमपि तत्सम्पादकवैदुष्यप्रसूतः स्यादिति मन्वते विपश्चितः ।

२२ 'छदः पुमान्' इत्यमरेण च्छंदशब्दस्य पुंस्त्वाभिधानात् 'छदश्च' इति भाव्यम् । किञ्च चार्थसमुच्चयेन त्रयाणामपि परामर्शात् 'अवघ्नन्ति' इत्युचितम् ।

२३ 'संपरिभ्यां करोतौ भूषणे' इत्यनेन विहितस्य सुटोऽभ्यासादुत्तरमौचित्यात् 'परिचस्कार' इत्येव प्रयोक्तव्यम् ।

२४ 'ल्यपि लघुपूर्वात्' इत्यनेनायादेशात् 'विरचय्य' इति भाव्यम् ।

२५ अभूततद्भावविरहात् च्विप्रत्ययोऽनुपपन्नः, 'उष्णः' इत्येव भवेत् ।

२६ सन्दिहानः समापृच्छन्नुच्छिष्यो गुरुणा बोधयितव्यः ।

२७ इदमस्मद्व्याचिख्यासितं विषयं पण्डिता विदाङ्कुर्वन्तु, मूर्खाः कथं विदाङ्करिष्यन्ति ।

२८ दिने सूर्यः प्रकाशकर्त्ता रात्रौ चाग्निसोमौ ।

२९ एष महिषवच्छ्यामो गौः कूलं चिखण्डयिषति ।

३० अस्मिन् बिले नकुलकुलानि विशन्ति, निविशन्ति च तस्मिन् मूषकाः ।

३१ अस्मिन् कुशासनेऽध्युषितः सुप्रजो राजा धैर्यधारिधौरेयोऽस्ति ।

३२ सुमेधसां सङ्गेन मन्दमेधसोऽपि पूज्या मेधाविनो भवन्ति ।

---

२६ 'आङि नुम्पृच्छयोरुपसंख्यानम्' इत्यनेनाङुपसृष्टस्य पृच्छेः शानचि 'सम्पृच्छमानः' इत्येवोचितम् ।

२७ 'विदां कुर्वन्त्वित्यन्यतरस्याम्' इत्यनेन लोट एवामादिर्विहितः, नान्यत्र लृडादौ ।

२८ 'ईदग्नेः सोमवरुणयोः' 'अग्नेः स्तुत्स्तोमसोमाः' इत्याभ्यां ईत्वे षत्वेच 'अग्नीषोमौ' इति भाव्यम् ।

२९ 'तेन तुल्यं क्रिया चेद्वतिः' इत्यनेन क्रियाप्रयुक्तसादृश्य एव वतिप्रत्ययो विहितः । प्रकृते च तदभावात् वतेरनवसरः । 'महिष इव श्यामो' इति तु स्यात् ।

३० 'नेर्विशः' इत्यनेनाऽऽत्मनेपदविधानात् 'निविशन्ते' इत्युचितम् ।

३१ 'उपान्वध्याङ्वसः' इत्यनेनाऽऽधारस्य कर्मसंज्ञा समुचिता, एवं 'सुप्रजः' इत्यत्र 'नित्यमसिच्प्रजामेधयोः' इत्यनेन च समासान्तेनासिचा नित्यं भाव्यम् । तथा च 'कुशासनम्' 'सुप्रजाः' इत्यपेक्षितम् ।

३२ 'नञ्सुदुःसुभ्य इत्येव' एभ्य एवासिचो विधानात् 'मन्दमेधस' इति न साधु, अपि तु 'मन्दमेधाः' इति साम्प्रतम् ।

३३ विरोचनमरीचिमाहात्म्यादन्धतमसं प्रणष्टम् ।

३४ प्राचीनपुस्तकानि पठनपाठनाद्यगोचरीभूय लुप्तानि ।

३५ संश्रृणुमहे रावणसेनायां चतुर्मूर्द्धानस्त्रिमूर्द्धानश्च दैत्या आसन् ।

३६ एष केवलं रूपवद्भार्यः, स तु रसिकभार्यः सरससुभाषिताऽऽनन्देन यामिनीर्गमयति ।

३७ आवयोरेष विशेषो यत् त्वमकेशपत्नीकोऽहञ्च सुकेशपत्नीकोऽस्मि ।

३८ पिकशावः; काकीभिः पाल्यते न तु काकीशावः पिकैः ।

३९ मूर्खाश्चतुःकृत्वः पञ्चकृत्वश्चोपदिष्टा अपि ग्रन्थाभिप्रायं नाधिगच्छन्ति ।

४० को न मधुरगानं शुश्रूषति श्रुतिमान् ?

---

३३ 'नशेः षान्तस्य' इत्यनेन णत्वनिषेधात् 'प्रनष्ट'मित्येवोचितम् ।

३४ अव्ययेनानव्ययस्य सर्वसाधारणस्थले समासनिषेधात् 'पठनपाठनाद्यगोचरा भूत्वा' इति व्यस्तप्रयोगः साधीयान् । गोचरशब्दस्त्वजहल्लिङ्गः ।

३५ 'द्वित्रिभ्यां ष मूर्ध्नः' इत्यनेन समासान्तेन षेण भाव्यम्, तथा च 'त्रिमूर्धाः' इत्युचितः ।

३६ रसिकभार्यः—इत्यत्र 'न कोपधायाः' इत्यनेन कोपधस्य पुंवद्भावनिषेधात् 'रसिकाभार्य' इत्येवोचितम् ।

३७ 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इत्यनेन ङीषि सुकेशीपत्नीक इत्येवावतिष्ठेत ।

३८ 'कुक्कुट्यादीनामण्डादिषु' इत्यनेन पुंवद्भावे 'काकशाव' इति भवेत् ।

३९ 'चतुरश्च' इत्यनेन कृत्वसुचोऽसुचि 'चतुः' इत्येव संपद्यते ।

४० 'ज्ञाश्रुस्मृदृशां सनः' इत्यनेनाऽऽत्मनेपदविधानेन 'शुश्रूषते' इति वक्तुमुचितम् ।

४१ तस्याऽऽचरणं बोधश्च प्रशस्यौ स्तः ।

४२ देवदत्तं प्रति शुश्रूषति यत् एषोऽनुजिज्ञासति ।

४३ देवी खड्गेन शुम्भस्य शिरोऽप्रहरत्स च ममार ।

४४ परमेतां दुराचारामवगत्यैतद्वितरितं न कोऽप्याददाति ।

४५ कथमेष आदत्तबहुधन आस्यं व्याददाति ? ।

४६ एष शुनको नित्यं भोजनसमये उपतिष्ठति ।

४७ अहोऽधुना राजा प्रतिष्ठासति शत्रून् विजिगीषया ।

४८ यथा भवान् स्वकेशान्स्तैलादिभिः संस्करोति तथाऽहमपि निजकेशान् संश्चिकीर्षामि ।

---

४१ 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्' इत्यनेन नपुंसकस्यैकशेषे 'प्रशस्ये' इति साम्प्रतम् ।

४२ अत्रापि 'ज्ञाश्रुस्मृदृशां सनः' इत्यनेनात्मनेपदं नाप्राप्तम् । तथा च 'शुश्रूषते' इति साम्प्रतम् । 'अनुजिज्ञासति' इत्यत्र तु 'नानोर्ज्ञः' इत्यनेनात्मनेपदप्रतिषेधः ।

४३ 'लुङ्लङ्लृङ्क्ष्वडुदात्त' इत्यनेन विहितस्याटो धातोरव्यवहितपूर्वमौचित्यात् 'प्राहरत्' इति प्रयोक्तुमुचितम् ।

४४ इड्विधायकाभावात् 'वितीर्णम्' इत्येव युक्तम् ।

४५ 'अच उपसर्गात्तः' इत्यनेन दकारस्य तत्वे 'आत्त' इत्येवोपपन्नम् ।

४६ 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम्' इत्यनेन 'उपतिष्ठते' इत्यात्मनेपदप्रयोग उचितः ।

४७ 'ओत्' इत्यनेन सन्ध्यभावः, 'समवप्रविभ्यः स्थः' 'पूर्ववत्सनः' इत्यात्मनेपदम्, 'कर्तृकर्मणोः कृति' इत्यनेन षष्ठी च भवन्ति । इत्थं च 'अहो ! अधुना राजा प्रतिष्ठासते शत्रूणां विजिगीषया' इति स्यात्साधुवाक्यम् ।

४८ 'संपरिभ्यां करोतौ भूषणे' इत्यनेन विहितः सुड् अभ्यासात्परं प्रसज्यते, तथा च 'संचिस्कीर्षामि' इति प्रयोक्तुमुचितम् ।

४९ एष महिषीपदेन हतो न तथा व्यथितो यथा मृगीपदेन ताडितः।

५० पादोपहतो विभीषणो रामं सेवयाम्बभूव।

५१ गोगोपगिलोऽघासुरः कृष्णेन व्यापादयाम्बभूवे।

५२ काविमौ समानरूपावाजिगमिषतः ?।

५३ स ऋक्सामनी अधीतवान्, एष तु ऋग्यजुषी।

५४ विद्वत्सभायां धर्मोपदेशो भवति, रक्षःसभासु च पापोपदेशः।

५५ किमिति नृपसभां निन्दसि न कदाऽप्यवलोकिता त्वया राजसभा।

५६ 'मेघा वर्षन्तु मेघा वर्षन्तु' इति सम्प्रवदन्ति कृषीवलाः।

---

४९ 'कुक्कुट्यादीनामण्डादिष्वि'त्यनेन पुंवद्भाव उचितः। तथा च 'मृगपदेन' इत्युचितम्।

५० 'सेवयाम्भूव' इत्यत्र णिजर्थोऽनन्वितः। तथा च 'सिषिवे' इत्युचितम्।

५१ 'गिलेऽगिलस्य' इत्यनेन गिलभिन्नस्य मुम औचित्यम्। तथा च 'गोगोपङ्गिल' इति युक्तम्।

५२ अत्र 'समानस्ये'त्यादिना सादेशे 'सरूपौ' इत्युचितम्।

५३ 'अचतुरसुचतुरे'त्यादिना स्थलद्वयेऽपि समासान्ताजन्तत्वेन निपातनात् 'ऋक्सामे' 'ऋग्यजुषे' इति वक्तुं युक्तम्।

५४ 'सभा राजाऽमनुष्यपूर्वा' इत्यस्मिन् सूत्रे 'अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह' इत्यभिहितत्वात् 'रक्षःसभेषु' इति नपुंसकप्रयोग उचितः।

५५ 'सभा राजा' इत्यनेन राजपर्यायपूर्वस्य सभान्तस्य तत्पुरुषे नपुंसकत्वविधानात् 'नृपसभम्' इत्युचितम्।

५६ 'व्यक्तवाचां समुच्चारणे' इत्यनेनात्मनेपदविधानात् 'सम्प्रवदन्ते' इति प्रयोक्तुमुचितम्।

५७ मामनाराध्य विद्याधिगमस्ते न भविष्यति ।

५८ इदमत्यन्तमशुद्धं वाक्यम्, एनं वैयाकरणोऽपि न वेत्ति ।

५९ खलानां संसर्गात्को न विरिरंसते ।

६० कम्पमानान् वृक्षान्दृष्ट्वा किमिह कम्पसे ? वायुरेतान् कम्पयते ।

६१ अहं सावधानतया वारंवारमुवाच, न भवन्तः शृण्वन्ति ।

६२ किमिति भोजयते भवानस्मान्, नाहं लशुनं कदाऽपि पस्पर्श ।

६३ व्यापारमिषेण गौरमुखा आर्यावर्तं स्माजग्मुः ।

६४ भो बालाः पठत, एवं स्म गुरुरुवाच ।

६५ हा धिक् ! अपि मातरमताड़यद् भवान् ।

---

५७ अस्मिन् वाक्ये न काऽप्यशुद्धिः प्रतिभाति । सम्भाव्यते ग्रन्थकारस्य मूललेखस्यानुपलम्भात्तत्र कोऽपि पाठभेदोऽशुद्धिघटितः स्यादिति ।

५८ एतच्छब्दस्य वाक्यपरामर्शित्वात् 'एनद्' इत्यावश्यकम् ।

५९ 'व्याङ्परिभ्यो रमः' इत्यनेन व्युपसृष्टस्य रमः परस्मैपदविधानात् सनस्तु पूर्वंनिघ्नत्वात् 'विरिरंसति' इत्युचितम् ।

६० 'निगरणचलनार्थेभ्यश्च' इत्यनेन ण्यन्ते त्वात्मनेपदनिषेधात् 'कम्पयति' इति प्रयोग उचितः ।

६१ स्वकर्तृकसावधानवचनस्य पारोक्ष्यानुपपत्त्या लिडनुचितः । तत्स्थाने 'अवोचम्' इति स्यात् ।

६२ 'निगरणाचलनार्थेभ्यश्च' इत्यनेन निगरणार्थे ण्यन्ते परस्मैपदविधानात् 'भोजयति' इति युक्तं प्रयोक्तुम् । 'पस्पर्श' इति लिडपि पारोक्ष्याभावादनुचितः

६३ 'लट् स्मे' इत्यनेन भूतेऽपि स्म-योगे लटो विधानात् लिड् नोपपद्यते, 'आगच्छन्ति स्म' इति वरम् ।

६४ 'लट् स्मे' इत्यनेन लटः प्रसक्ततया 'आह स्म' इत्युचितम् ।

६५ 'गर्हायां लडपि जात्वोरि'त्यनेन गर्हास्थले सर्वलकारापवादभूतो लड् भवति । तथा च 'ताडयति' इत्युचितम् ।

६६ अहो ! किं जातु वेश्यामभियास्यति भवान् ?

६७ न श्रद्दधे किङ्किल त्वं वेश्यां स्निह्यसि ? ।

६८ यत् त्वं ब्राह्मणः सुरां सेवसे, यच्च शूद्रीमुखं चुम्बसि, अन्याय्यं तत्।

६९ चित्रं यच्च वैष्णवो मत्स्यमांसमभुनक् ।

७० हरिभक्तो भूमिस्थोऽपि वासवं हसति ।

७१ अध्यापक-ब्राह्मणाः शिष्यान् पिपाठयिषन्ति ।

७२ अनयोरेकः सुरापी अन्यश्च क्षीरपी ।

७३ एष सन्देशहर एव भारहरतामङ्गीकरिष्यति ।

---

६६ अत्रापि गर्हायामित्यनेन लटा भाव्यम् , तथा च 'अभियाति' इत्युचितम्।

६७ 'किङ्किलास्त्यर्थेषु लृट्' इत्यनेन लृटा भाव्यम् , तथा च 'स्नेक्ष्यसि' इति युक्तम्।

६८ 'शूद्राचामहत्पूर्वजातिः' इत्यनेन टापि 'शूद्रामुखं' इति वरम् । ( यद्यपि 'पुंयोगादाख्यायाम्' इत्यनेन ङीषि 'शूद्री' इत्यपि भवितुमर्हति, तथा चामरसिंहः-'शूद्री शूद्रस्य भार्या स्यात्' इति प्रायुङ्क्त । )

६९ 'भुजोऽनवने' इत्यनेनात्मनेपदमुचितम्। तथा च 'अभुंक्त' इति साम्प्रतम्।

७० 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः' इत्यनेन स्थस्य सकारस्य षत्वे 'भूमिष्ठः' इति वक्तुमुचितम्।

७१ 'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः' इत्यनेनाध्यापकपदस्य परनिपात उचितः। 'ब्राह्मणाध्यापकाः' इति प्रयोक्तुमुचितम् ।

७२ विधेयानुरोधेन एकान्यपदाभ्यां स्त्र्यन्ताभ्यां भाव्यम् । किञ्च 'पिबतेः सुरासीध्वोरिति वक्तव्यम्' इत्यनेन टकोऽप्रवृत्त्या ङीप् न भवति। ततश्च 'क्षीरपा' इत्येव साधीयः ।

७३ 'हरतेरनुद्यमनेऽच्' इत्यनेनानुद्यमनार्थं एवाचो विधानात् प्रकृते तदप्रवृत्त्या 'कर्मण्यण्' इत्यनेनाणेव भवति, तथा च 'भारहारतामि'ति वरम्।

७४ एष कर्मकरः स च कलहकरः, उभावपि निशाकरं नावलोकयतः।

७५ सज्जनः क्लेशापहो दुर्जनश्च सुखापहो भवति।

७६ जगत्कर्त्ता नित्योऽनित्यो वेत्यस्य समाहितिः कार्य्या।

७७ एष मूकस्तृषां द्योतयितुं मुखं व्याददन् पानीयं याचते।

७८ अस्मिन् वृक्षे द्वे फलेऽतितरां संशोभेते।

७९ गुरुम्प्रार्थयित्वा गृहं गच्छत।

८० भो गणक ! अस्य कुक्कुट्यण्डकस्य क्षेत्रफलं दिश।

८१ लज्जावती नवोढा विलसद्भ्यां दृग्भ्यां वीक्षते।

८२ अहो ! आनन्दम् , यद्राजा प्रजावत्सलतामूरीकरोति।

---

७४ 'न शब्दलोककलहे'त्यादिना टस्य निषेधात् 'कर्मण्यण्' इत्यनेनाणि 'कलहकार' इत्येव वरीयः।

७५ 'अपेक्ष क्लेशतमसोरि'त्यनेन क्लेशतमोभ्यामन्यत्र डस्य प्राप्तिर्नास्ति। 'सुखापहा' इति क्विपि भवितुमर्हति।

७६ 'जगत्कर्ता' इत्यत्र शीलार्थकतृन्नन्तत्वे 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इत्यनेन समासनिषेधः प्रसज्येत। 'जगतः कर्ता' इति वरम्।

७७ 'नाभ्यस्ताच्छतुरि'ति नुम्निषेधात् 'व्याददत्' इत्येव युक्तम्।

७८ 'ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यनेन प्रगृह्यसंज्ञायां प्रकृतिभावस्यापरिहार्यत्वेन 'फलेऽति' इति सन्धेरनौचित्यम्।

७९ 'प्रार्थयित्वा' इत्यत्र ल्यबावश्यकः। तथा च 'प्रार्थ्य' इति वक्तुं युक्तम्।

८० 'कुक्कुट्यादीनामण्डादिष्वि'त्यनेन पुंवद्भावे 'कुक्कुटाण्डस्ये'त्येव प्रयोक्तुमुचितम्।

८१ 'विलसद्भ्या'मित्यत्र विशेष्यानुरोधेन स्त्रीत्वौचित्ये 'उगितश्चे'त्यनेन ङीपि 'विलसन्तीभ्याम्' इत्युचितम्।

८२ 'स्यादानन्दथुरानन्दः' इति कोषप्रामाण्यात्पुंस्त्वमपेक्षितम्।

८३ एषा नदी उच्छलद्भिरद्भिरिमं नीवृद्भागं रुन्धति स्म ।

८४ स श्वेतैर्मुक्ताफलैर्भ्रातारं स्वसारं च भूषयति ।

८५ हन्त ! कष्टं यद्वयं संस्कृतभाषां परित्यज्य यवनभाषामधीयिमहे।

८६ भवान् स्वपुत्रस्य नाम कदा ब्रविष्यति ?

८७ त्वया अहिनकुलयोर्वृत्तान्तः समगामि ।

८८ एष वीरः शत्रूनाहन्ति, शत्रुपत्न्यश्च स्वमेव शिरोवक्षश्चाऽऽघ्नन्ति ।

८९ एते बुभुक्षिता विद्यार्थिनः पाकपात्राण्युत्तपन्ति, स तु शीतार्त्तः स्वं पाणिमेवोत्तपति ।

९० अग्निं सन्तप्तमयोऽपि दहिष्यति ।

९१ यद्येवं न दास्यसि चेत्तर्हि राजनियमान्निग्राह्य गृहीष्यामि ।

---

८३ विशेष्यनिनतया 'उच्छलन्तीभिरि'ति भाव्यम्। 'रुणद्धि' इत्यप्यावश्यकम्।

८४ 'अप्तृन्तृजित्या'दिना नियमनात् दीर्घानवसरात् 'भ्रातरमि'त्येव साम्प्रतम्।

८५ 'टित आत्मनेपदानां टेरे'रित्यस्याप्रसक्त्या एत्वं न। 'अधीयीमहि' इत्युचितम् ।

८६ 'ब्रुवो वचिः' इत्यनेन वच्यादेशे 'वक्ष्यती'त्येव युक्तम् ।

८७ 'येषाञ्च विरोधः शाश्वतिकः' इत्यनेन नित्यसमाहारे 'अहिनकुलस्य' इति भवति। 'मितां ह्रस्वः' इत्यनेन 'समगमि' इत्युचितम् ।

८८ 'आङो यमहनः' 'स्वाङ्गकर्मकाच्चे'त्यनेनात्मनेपदविधानात् उत्तरवाक्ये 'आघ्नते' इत्युपपन्नम् ।

८९ अत्रापि 'स्वाङ्गकर्मकादि'त्येनेनात्मनेपदं प्राप्तम्। तथा च 'उत्तपते' इति युक्तम् ।

९० इडप्राप्त्या 'धक्ष्यति' इत्येवोपपद्यते ।

९१ लृटि सम्प्रसारणाप्रसक्त्या 'ग्रहीष्यामि' इत्युपपद्यते ।

९२ सर्वेऽपि 'गुप्ताशुद्धिप्रदर्शनम् क्व मिलति' इति पपृच्छुः ?
९३ यः पठेन्नातियत्नेन न स विद्यां लभेत् क्वचित् ।
९४ दातारः स्वं प्राणं वर्ष्माणि च ददन्ति ।
९५ क्लेशितो बाल उच्चै रुरोदिषति ।
९६ विषयी दरिद्राति त्यागिनस्तु न दरिद्रान्ति ।
९७ स तस्य गुणानजीगणत्, मदग्रे च अचीकथत् ।
९८ धन्या गोपकन्या या वन्याऽपि कृष्णमनः समचुचोरत् ।
९९ शीघ्रं पठनमारभणीयम्, ज्ञानं च लभनीयम् ।
१०० कृष्णे जाते कंसप्रहरिमण्डल असुस्वपत् ।
१०१ पञ्जरस्थोऽपि व्याघ्रो देवदत्तं भीषयति, स च तत्कथाख्यानैरपरान् भीषयते ।

---

९२ 'ग्रहिज्यावयी'त्यादिना ङित्स्वेव सम्प्रसारणविधानात् प्रकृते 'पप्रच्छुः' इति साम्प्रतम् ।
९३ डुलभष् धातोरात्मनेपदिधातुषु पाठात् 'लभेत' इति साम्प्रतम् ।
९४ 'नाभ्यस्तादे'ति नुम्निषेधात् 'ददति' इत्युचितम् ।
९५ गुणाप्रसक्त्या 'रुरुदिषति' इत्येवोचितम् ।
९६ 'अदभ्यस्तादि'ति अदादेशे बहुवचने 'दरिद्रति' इत्युचितम् ।
९७ अग्लोपित्वादभ्यासस्येत्वाभावात् 'अचकथत्' इत्युचितम् ।
९८ गुणानवसरात् 'दीर्घो लघोः' इत्यनेन 'समचूचुरत्' इत्युचितम् ।
९९ उभयत्र 'रभेरशब्लिटोः' 'लभेश्च' इत्याभ्यां नुमि 'आरम्भणीयम्, 'लम्भनीयम्' इत्युचितम् ।
१०० णेरनावश्यकतया 'अस्वपत्' इति व्युत्पाद्यम् ।
१०१ 'भियो हेतुभये षुक्' इति हि षुग्विधायकम् । परन्त्वत्र हेतुभयवैधुर्यात् षुगप्राप्तिः । 'भाययति' इत्युचितम् । तथा च कालिदासो मेघदूते 'गर्जितैर्भाययेस्ताः' इति प्रयुयोज ।

१०२ उत्तरस्यां दक्षिणस्यां च ध्रुवौ स्तः, पूर्वस्यां पश्चिमस्यां च रवेरुदयास्तौ ।
१०३ अस्मादृक्षो युष्मादृशं न सिषेविषति ।
१०४ अहं भवन्तं रणाजिरं सनाथयितुमुत्सिषाहयिषामि ।
१०५ क्रीडन्तं बालं दृष्ट्वा माता अहासीत् ।
१०६ बालकः फलानि विहाय मृत्तिकामबिभक्षत् ।
१०७ जननीदुग्धेन बालस्य कण्ठमार्द्रं बभूव ।
१०८ सुरापानेषु देशेषु ब्राह्मणा न यान्ति ।
१०९ कर्तृगामिनि क्रियापदे आत्मनेपदम् ।
११० सा आर्द्रगोमयेण माषकुम्भावापेण च गृहं भूषयति ।
१११ 'नन्दप्राङ्गणसंस्थितो हरिरसौ सानन्दमाक्रीडति' ।

❀ इति महाकवि श्रीमदम्बिकादत्तव्यासप्रणीतं गुप्ताशुद्धिप्रदर्शनम् ❀

---

१०२ सर्वनामसंज्ञाभावात् स्याटोऽप्रसक्ततया 'पश्चिमायाम्' इति, अव्ययत्वात् 'उदयास्तमि'ति च युक्तम् ।
१०३ 'पूर्ववत्सनरि'त्यनेनात्मनेपदं भवति, तथा च 'सिषेवते' इत्युपपद्यते ।
१०४ 'सः स्वदि'—इत्यादिना षत्वप्रतिषेधात् 'उत्सिसाहयिषामि'इत्युचितम् ।
१०५ 'ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्' इत्यनेन वृद्धिनिषेधात् 'अहसीत्' इति शोभनम् ।
१०६ णिचोऽनुपयोगात् 'अभक्षत' इति भाव्यम् ।
१०७ 'कण्ठो गलोथ ग्रीवाया'मित्यभिधानात् पुंस्त्वे 'कण्ठ आर्द्रो' इत्युचितम् ।
१०८ 'पानं देशे' इत्यनेन णत्वे 'सुरापाणेषु' इति साम्प्रतम् ।
१०९ 'कुमति च' इत्यनेन णत्वे 'कर्तृगामिणि' इति वरीयः ।
११० 'पदव्यवायेऽपी'ति णत्वनिषेधात् 'माषकुम्भावापेन' इति समीचीनम् ।
१११ 'क्रीडोऽनुसम्परिभ्यश्च' इत्यत्र चादाङुपसृष्टस्याप्यात्मनेपदं साम्प्रतम् ।

# अभ्यर्थनम्

श्रीमद्गौडेन्द्रवंशे हरिचरण-रजःपूर-पूतान्तरात्मा
दुर्गादत्ताभिधानः समजनि सुयशोभासिशोभाविशिष्टः ॥
तत्पुत्रः श्रीशपादाम्बुजयुगमधुलिट् तातपादोपसेवी
अम्बादत्ताभिधानः सरुचि रचितवान् संस्कृताऽशुद्धिगद्यम् ॥१॥

स्वसाधुवादेन विजृम्भितानां
कृपाकटाक्षैः समुदञ्चितानाम् ।
लेखस्त्वयं सद्रुचिरोचितानां
स्यादास्पदं विज्ञ-विलोकितानाम् ॥ २ ॥

दोषज्ञा अपि विद्वांसः स्वीकुर्वन्तु गुणज्ञताम् ।
लेखं मदीयमालोक्य बालबोधविधायकम् ॥ ३ ॥

॥ श्रीसरस्वत्यै नमः ॥

# व्युत्पत्तिप्रदर्शनम्

—⊹✻⊹—

## कर्तृगुप्तम्

व्यामोहं तव च्छिन्दन्तु भिन्दन्तु दुरितानि च ।
कर्तृगुप्तमिमं श्लोकं ये जानन्ति विचक्षणाः ॥ १ ॥

---

॥ श्रीरामभद्रः शरणम् ॥

सीतारामपदद्वन्द्वकञ्जे नित्यं विकस्वरे ।
अक्षय्यमकरन्दाब्धौ चित्तभृङ्गो निमज्जतु ॥ १ ॥

प्राचीने कूटवृन्दे बहुभिरिह बुधैः स्फोटिते संगृहीते
व्याख्यासौकर्यशून्ये सुरगिरि नितरां क्षीयमाणप्रचारे ।
व्याख्यां सन्धाय तावद्धरिचरणकृपोल्लासितां दर्पणाख्यां
व्युत्पित्सून् कूटवारः प्रतिफलित इहाऽऽलोक्यतामित्याह्वयामि ॥२॥

काव्यजीवनभूतस्य प्रतिबन्धाद्रसस्य हि ।
अवमत्वेऽपि कूटानां व्युत्पत्तिर्नैव वार्यते ॥ ३ ॥

इह खलु विहिताचरणप्रतिषिद्धवर्जनयोरैहिकामुष्मिकाभ्युदयजनकत्वाद् विधिनिषेधयोः शास्त्रैकसमधिगम्यत्वाच्छास्त्रस्य चार्थतः प्रवृत्तिनिवृत्तिज्ञानजनकत्वस्यैव लक्षणत्वे पर्यवसिते सत्काव्यस्यापीदृग्लक्षणाक्रान्ततया शास्त्रकाव्ययोरुपादेयतातारतम्ये पर्यालो-

च्यमाने चित्तावर्जनपूर्वकं कान्तावत्सारस्यसारल्याभ्यां निरुक्तज्ञान-जनकस्य सत्काव्यस्यैव 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदि'ति नयेन संग्रहणीयतरत्वौचित्यमिति भणतां काव्यकोविदानां पक्षं; 'प्रधानेन व्यपदेशा भवन्ती'ति न्यायाच्छास्त्रं आनखशिखं कर्तव्याकर्तव्यमेव व्यासेन प्रत्यपादि, तदर्थमेव शास्त्रं गृहीतजन्म, भवतां सत्काव्ये तु साङ्गोपाङ्गाङ्गनाङ्गवर्णनाघनाघनपिहितो विधि-निषेधवृत्तान्तभास्करः क्षीणप्रतिभासः प्रवृत्तिनिवृत्तिजनने नाल-म्भूष्णुः । बाढम्, 'अकरणान्मन्दकरणस्य श्रेयस्त्वाद्' दुरूहशास्त्रेभ्यो भृशं बिभ्यतां भूपडिम्भप्रभृतीनां कुत्रचित् कश्चित्सदुपदेशोऽपि कृतः स्यादिति 'मन्यतां बिडालस्तक्रमेव पय इति' इति न्यायादभ्यु-पेमः, इति साक्षेपं प्रतिक्षिपन्तोऽपि शास्त्रमात्रबद्धश्रद्धा उत्तानेक्षणाः प्रेक्षावन्तः शास्त्राधिकारितावच्छेदककुक्षिनिक्षिप्तस्य काव्यकोषाद्य-ध्ययनस्य कर्तव्यतायां नैव विप्रतिपद्यन्ते । तदेतत्काव्यं ध्वनिगुणी-भूतव्यङ्ग्यचित्रभेदात् त्रिविधम् । तत्र तार्तीयीकभेदे चित्रे काव्या-त्मभूतस्य व्यङ्ग्यस्य स्फुटतयाऽनुपलम्भात्कवेः शब्दार्थवैचित्र्यप्रदर्शन एव संरम्भादस्यावरत्वेऽपि व्युत्पत्त्याधायकतायां विवादाभावात्; प्रत्युत कविना व्यङ्ग्यविषये पराङ्मुखीभूय विच्छित्तिजनकव्युत्प-त्तिप्रसूयमानशब्दार्थविन्यास एव महताऽवधानेन प्रवृत्तत्वादितरभेद-द्वयापेक्षयाऽस्यैव सातिशयं व्युत्पादकत्वम् । अत एव भारविमाघ-श्रीहर्षादयो महाकवयो महताऽऽटोपेन चित्रभेदं स्वस्वकृतौ समावे-शयामासुः । तदेव चित्रं यतस्ततः संकलय्यात्र प्रकरणेषु यथोचितं समावेश्य व्याख्यायते । इमानि कर्तृत्वादिगोपनानि क्वचित्तथात्वेऽपि नियमेनार्थान्तरसत्त्वप्रयुक्तानीति नाऽऽग्रहः । एषां पद्यानामेकप्रति-पाद्यकत्वाभावात्परस्परं सापेक्षताऽपि न ।

इहैव गोप्यते कर्ता वर्षेणापि न लभ्यते ॥ २ ॥

---

कर्तृगुप्तम्

व्यामोहमिति । उः शङ्करः, इः ब्रह्मा कामो वा, अः विष्णुः, एषां द्वन्द्वे यणसन्धिद्वये च 'व्याः' इति सिद्ध्यति । 'उकारः शङ्करः प्रोक्तः', 'इकार उच्यते कामः', 'अकारो वासुदेवः स्यादि'ति चैकाक्षरी । 'व्याः' इत्यत्र जसः सकारस्य रुत्वे यत्वे 'लोपः शाकल्यस्ये' त्यनेन यलोपश्च । तव श्रोतुः, अभिनन्दनीयस्य वा यस्य कस्यचित्, मोहं अज्ञानम्, छिन्दन्तु शकलयन्तु, नाशयन्त्वित्यर्थः । 'छे च' इति तुगागमः । दुरितानि पापानि, 'अंहोदुरितदुष्कृतम्' इत्यमरः । दुःखप्रयोजकान्यदृष्टानि निषिद्धकर्मजानि, दुःखस्येव तत्कारणस्यापि हेयत्वम् । भिन्दन्तु विदारयन्तु, उभयत्रापि नाशरूपो भाक्तोऽर्थो विवक्षितः । कर्ता गुप्तो यस्य तं तादृशमिमं श्लोकं ये जानन्ति अयं कर्ता इति विवेकेन विदन्ति, ते, यत्तदोर्नित्यसम्बन्धः, विचक्षणाः विद्वांसः । 'विद्वान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः । कर्तृगुप्तादिनाम्नैव तत्तल्लक्षणस्यानावृतत्वात्तत्र तत्र लक्षणपरिकल्पनातत्समन्वयादीनां डम्बरो नेह प्रतन्यते ॥ १ ॥

गौरीनखरेति । इः कामः, तं हन्तीति 'इहा' शिवः, गौर्याः पार्वत्याः, नखराः नखाः, 'नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । तेषां सादृश्यं साधर्म्यम्, तस्य श्रद्धया विश्वासेन, शशिनं चन्द्रं दधौ दध्रे । भवो मानिन्या भगवत्या अनुनयाय तदीयचरणनखरसदृशमर्धचन्द्रं मूर्ध्नि धृतवानित्यर्थः । स्वसदृशवस्तुनोऽप्यादरे स्वस्याप्यादरो विहित एवेति भावः । इहेत्यस्यात्रेत्यर्थकत्वं सुप्रसिद्धमेव । अतः, इहैव अत्रैव पदे कर्ता क्रियाश्रयः प्रथमान्तपदोपस्थाप्यः, गोप्यते निह्नूयते, आपाततः प्रतीत्यनारूढेन पदेनेति शेषः । वर्षेणापि वत्सरपरिमितकालेनापि न लभ्यते नासाद्यते निर्णेतुं न शक्यते । चिरं विचारे क्रियमाणेऽपि अयं कर्तेति वक्तुं न पार्यत इति बुद्धिसन्दीपनायाऽऽक्षेपः ॥२॥

शरदिन्दुकुन्दधवलं नगपतिनिलयं मनोहरं देवम् ।
यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ ३ ॥
अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च ।
ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ ४ ॥
राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ ।

---

यैरिति । यैः पुरुषैः, अनिशं सन्ततम्, 'सन्ततविरतानिशम्' इत्यमरः । सुकृतं पुण्यम्, कृतं अनुष्ठितम्, सुकृतस्य स्वतोऽननुष्ठेयत्वेऽपि तज्जनककर्मणोऽनुष्ठेयत्वात्तस्याप्यनुष्ठेयत्वमुपचरितम् । तेषामेव कृतपुण्यानामेव, एवकारेण पापिनां व्यवच्छेदः । 'मनः' चित्तम्, शरदिन्दुकुन्दवत् शारदचन्द्रकुन्दकुसुमवत्, धवलं शुभ्रम्, नगपतिः पर्वतश्रेष्ठः, निलयः सद्म यस्यैवम्भूतं कैलासवासिनं देवं क्रीडादिगुणविशिष्टम्, हरतीति हरः पापनाशकः शिवः, तं प्रसादयति तोषयति । सुकृतिन एव भगवति भर्गे भक्तिं कुर्वन्तीति भावः । अत्रापि 'मनोहर' शब्दघटकमनःपदस्यैव कर्तृत्वमापाततः सर्वथा न स्फुरति ॥ ३ ॥

अन्नेति । ब्राह्मणेषु विप्रेषु इभ्यः धनी, 'इभ्य आढ्यो धनी स्वामी' त्यमरः । 'ब्राह्मणेभ्यः' नदीतीरे स्रोतस्वतीकूले, अन्नानि च वस्त्राणि च सुवर्णानि चेति द्वन्द्वः । विविधानि नानाप्रकाराणि रत्नानि च ददाति वितरति, सत्वरं आशु, 'सत्वरं चपलं तूर्णमविलम्बितमाशु च' इत्यमरः । व्रज गच्छ, अनुज्ञायां लोट् । अत्राप्यापाततो 'ब्राह्मणेभ्यो' इति चतुर्थ्यन्तं दानक्रियासम्प्रदानं प्रतिभाति ॥ ४ ॥

राक्षसेभ्य इति । राक्षसानां इभ्यः स्वामी 'राक्षसेभ्यः' रावणः, जनकस्य मिथिलाधिपतेः, सुतां सीताम्, हृत्वा चोरयित्वा, पुरीं स्वनगरीं लङ्काम्, ययौ जगाम, अत्र अस्मिन् पद्ये, कर्तृपदं कर्तृबोधकं पदम्, गुप्तं प्रच्छन्नम्, दशवार्षिकी दशवत्सरपरिमिता मर्यादा अवधिः, कर्तृपदान्वेषणायेति शेषः ।

अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ ५ ॥
श्यामौ तव स्तनावेतौ पिबन्ति सततं मुदा ।
अत्र कर्तृपदं गुप्तं व्युत्पत्त्या लभ्यते क्वचित् ॥ ६ ॥
न करोति नाम रोषं न वदति परुषं न हन्त्ययं शत्रून् ।
रञ्जयति महीमखिलां तथाऽपि धीरस्य वीरस्य ॥ ७ ॥
प्रमोदं जनयत्येव सदारा गृहमेधिनः ।

---

अत्र यद्यपि तुरीये चरणे 'दशवार्षिकी' इति पदं च्युतसंस्कृतिकम् । 'तद्धितेष्वचामादेरि'त्यनेनाऽऽदिवृद्धेरपरिहार्यत्वात् । 'यो जानाति स पण्डितः' इति वा तत्स्थाने पठनीयम् ॥ ५ ॥

श्यामाविति । श्यामाः कृष्णवर्णाः, ओतवः मार्जाराः, 'ओतुर्बिडालो मार्जार' इत्यमरः, 'श्यामौतवः' । 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इत्यनेन वार्त्तिकेन विसर्गलोपो द्रष्टव्यः । एतौ परिदृश्यमानौ स्तनौ पयोधरौ, मुदा प्रीत्या, 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः । सततं अविरतम्, पिबन्ति । अत्र कर्तृपदं गुप्तं गूढम्, व्युत्पत्त्या स्फूर्त्या, क्वचित् क्वचिदेव लभ्यते ज्ञायते ॥६॥

नेति । अयं वर्णनीयो राजा, रोषं क्रोधम्, न करोति नाम न विदधाति स्फुटम्, नामेत्यव्ययम्, 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः । परुषं निष्ठुरम्, 'निष्ठुरं परुषं ग्राम्यमि'त्यमरः । न वदति न कथयति, शत्रून् रिपून्, न हन्ति न ध्वंसयति, तथापीति विरोधे, क्रोधकरणनिष्ठुरकथनशत्रुहननाभावेऽपि, अखिलां कृत्स्नाम्, 'कृत्स्नमखिलाखिलानी' त्यमरः । महीं पृथ्वीं रञ्जयति अनुरक्तां करोति । कत्राकाङ्क्षायामाह—अस्य ईदृशनीतिनिपुणस्य, वीरस्य शूरस्य, 'धीः' बुद्धिः ॥ ७ ॥

प्रमोदमिति । गृहमेधिनः गृहस्थस्य, धर्मः प्रथमपुरुषार्थभूतो वेदप्रतिपाद्यप्रयोजनवदर्थः, 'चोदनालक्षणोऽर्थो धर्मः' इति महर्षिजैमिन्युक्तेः । कामश्च तृतीयपुरुषार्थत्वेन परिगणित इच्छाविषयो भोगः, चकार इतरेतरयोगे ।

यदि धर्मश्च कामश्च भवेतां संगताविमौ ॥ ८ ॥

कर्मगुप्तम्

सुभग तवाऽऽननपङ्कजदर्शनसंजातनिर्भरप्रीतेः ।
शमयति कुर्वन् दिवसः पुण्यवतः कस्य रमणीयः ॥ ९ ॥

एहिं हे रमणि पश्य कौतुकं धूलिधूसरतनुं दिगम्बरम् ।

---

'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमरः। इमौ द्वौ, संगतौ परस्परसम्बद्धौ, अन्योन्याविघातकावित्यर्थः । 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति भगवदुक्तेः । भवेतां यदि स्यातां चेत्, तदेत्यध्याहार्यम्, राः अर्थः, 'अर्थरै विभवा अपी'त्यमरः । 'रायो हलि' इत्यनेनाकारः । सदा सर्वदा, प्रमोदं आनन्दम्, जनयत्येव सम्पादयत्येव । परस्परानुकूल्योर्धर्मकामयोरर्थोऽपि सहकारी चेत् कुटुम्बे महानानन्दः स्यादिति भावः । इदं पद्यं सुब्वचनगुप्तस्योदाहरणमिति पृथक्परिकल्पयन्ति, प्रथमादिसप्तम्यन्तगुप्तोदाहरणानां पृथक् पृथगष्टश्रेणीपरिकल्पनात्तदतिरिक्तस्य सुब्वचनस्यानुपलम्भादस्माभिरिहैवौचित्यात्समावेशः कृतोऽस्य पद्यस्य । एतेषां पद्यानां कतिचिदेव विदग्धमुखमण्डनकारस्य धर्मदाससूरेः, अन्यान्यसंस्तुतकर्तृकाणि ॥ ८ ॥

कर्मगुप्तम्

सुभगेति । सुभग ! भाग्यशालिन्, तव, आननपङ्कजस्य मुखकमलस्य, दर्शनेन वीक्षणेन, संजाता उत्पन्ना, निर्भरप्रीतिः गाढप्रमोदः, यस्यैवम्भूतस्य पुण्यवतः सुकृतिनः, 'सुकृती पुण्यवान् धन्य' इत्यमरः । कस्य, 'शं' सुखम्, 'शं सुखं शङ्करः श्रेयः' इत्येकाक्षरी, कुर्वन् विदधत्, रमणीयः शोभनः, दिवसः दिनम्, अयति गच्छति, इटकिटेत्यत्र प्रश्लिष्टोऽयं परस्मैपदी । अत्र 'शम्' इति कर्मवाचकं गुप्तं वर्तते ॥ ९ ॥

एहीति । हे रमणि, हे सुन्दरि ! 'सुन्दरी रमणी रामे'त्यमरः । एहि आयाहि, कौ पृथिव्याम्, 'गोत्रा कुः पृथिवी' इत्यमरः । धूलिभिः रेणुभिः,

साऽपि तद्वदनपङ्कजं पपौ भ्रातरुक्तमपि किं न बुद्ध्यते॥१०॥
शीकरासारसंवाहिसरोजवनमारुतः ।
प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ ११ ॥

---

'रेणुर्द्वयोः स्त्रियां धूलिरि'त्यमरः । धूसरा मलिना, तनुः शरीरम्, 'देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूरि'त्यमरः । यस्य तं तादृशम्, दिगम्बरं नग्नम्, विवस्त्रस्य दिशामेवाम्बरस्थानीयत्वात् । 'तुकं' शिशुम्, पश्य अवलोकय । साऽपि एवमभिहिता रमण्यपि, तस्य शिशोः, वदनपङ्कजं मुखकमलम्, पपौ सस्पृहं दृष्टवती, भ्रातः अयि ! इदम्पद्यपाठक !, उक्तमपि कथितमपि कर्मपदं 'तुकम्' इतीदम्, न तूत्तरार्धगतं पङ्कजान्तपदम्, तस्यागूढत्वात्पूर्वार्धगतदृशिक्रियावाचकस्यानन्वितत्वाच्च । किमित्याक्षेपे । न बुद्ध्यते न ज्ञायते ॥ १० ॥

शीकरेति । पान्थानां अध्वनीनाम्, स्त्रीणां प्रेयसीनाम्, प्रोषितभर्तृकाणामित्यर्थः। निःश्वासैः नासानिर्गतवायुभिः,विरहिण्यो दीर्घं दुःखान्निश्वसन्तीति भावः । मांसल इव स्थूल इव, पुष्ट इवेति सिद्धहेतूत्प्रेक्षा । 'सिध्मादिभ्यश्चे'ति लच् प्रत्ययः । जवनमारुतः वेगवान् मारुतः, 'प्रजवी जवनो जवः' इत्यमरः । शीकराः अम्बुकणाः, 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः, तेषां आसारः धारा, 'धारासम्पात आसारः' इत्यमरः । तं संवहतीति नयतीति तादृशमिति व्यस्तम् 'सरः' सरसीम्, 'कासारः सरसी सरः' इत्यमरः । प्रक्षोभयति प्रकर्षेण तरङ्गयति । कम्पयतीति यावत् । यत्त्वत्र 'शीकरासारसंवाहिजवनः मारुतो वेगवान् वायुः 'सरः' प्रक्षोभयति' इति सु० भाण्डागारस्था टिप्पनी सा त्वसङ्गता । ......संवाहिपदस्यान्तरालवर्ति सरःपदमुल्लुत्य जवने समस्ततयैव सम्बन्धः कथंकारं घटताम् ? व्यस्तप्रयोगे तु 'संवाही' इति दीर्घोऽपरिहार्यः खलु । दीर्घपाठपक्षे मारुतविशेषणं ज्ञेयम् । सरोजानां वनं तस्य मारुत इति मानादत्र 'सरः' इति कर्मपदं गुप्तम् ॥ ११ ॥

करणगुप्तम्

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी ।
दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे ॥ १२ ॥
अहं महानसायातः कल्पितो नरकस्तव ।
मया मांसादिकं भुक्तं भीमं जानीहि मां बक ॥ १३ ॥

सम्प्रदानगुप्तम्

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ।

---

करणगुप्तम्

पूतीति । घनागमे वर्षर्तौ, पूतिपङ्कमये दुर्गन्धकर्दमप्रचुरे कासारे सरसि, 'दुर्वारा' कलुषितवारिणा, 'आपः स्त्री भूम्नि वार्वारी'त्यमरः । अत्यर्थं भृशम्, 'अतिवेलभृशात्यर्थातिमात्रोद्गाढमि'त्यमरः । दुःखिताः, उद्विग्नाः, जलकालुष्यात्पद्मविलयाच्चेति भावः । हंसाः शुभ्रपक्षाः, 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः' इत्यमरः । मानसं तदाख्यं सरः, गमिष्यन्ति यास्यन्ति । वर्षासु हंसानां मानससरोवरगमनं कविसमयसिद्धम् । अत्र करणवाचकं 'दुर्वारा' इतिपदं हंसविशेषणत्वेनापि योजनीयतामर्हत् करणत्वेन बुद्धौ सहसा नाविर्भवति ॥ १२ ॥

अहमिति । अहं भीमः 'महानसा' बृहता शकटेन, 'क्लीबेऽनः शकटोऽस्त्री स्यादि'त्यमरः । आयातः आगतः, तव बकासुरस्य, कल्पितः सृष्टः, नरकः दुःखप्रदातृत्वेन नरकत्वेनाध्यवसितः, अस्मीति शेषः । मया मांसादिकं त्वदन्नत्यर्थं एकचक्रानिवासिगृहस्थप्रेषितं भुक्तं जग्धम्, हे बक ! मां भीमं भयङ्करम्, 'घोरं भीमं भयानकमि'त्यमरः, द्वितीयपाण्डवं भीमाभिधं च जानीहि विद्धि । अत्र 'महानसा' इति करणम् ॥ १३ ॥

सम्प्रदानगुप्तम्

अम्भोरुहमिति । कामिनी कान्ता, वापीपयसि दीर्घिकाजले, 'सरो

ददाति भक्तिसम्पन्ना पुत्रसौभाग्यकाम्यया ॥ १४ ॥
प्रशस्त्यायुक्तमार्गस्य तव संमानितां श्रिताः ।
स्पृहयन्ति न के नाम गुणरत्नालय प्रभोः ॥ १५ ॥

अपादानगुप्तम्

शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः ।

---

वापी तु दीर्घिका' इत्यमरः । स्नात्वा अवगाह्य, भक्तिसम्पन्ना भावविशेषयुक्ता सती, पुत्रसौभग्ये सुत-पतिदीर्घजीविते कामयते इति पुत्रसौभाग्यकाम्यति इच्छार्थके 'काम्यच्च' इत्यनेन काम्यचि सनाद्यन्तत्वेन धातुत्वे स्त्र्यधिकारस्थेन भावार्थकेन 'अ प्रत्ययादि'ति विहितेनाप्रत्ययेन स्त्रीत्वनिबन्धने टापि पुत्रसौभाग्यकाम्येति सिद्ध्यति, तया कामनया, 'अये' कामदेवाय, 'इकार उच्यते कामः' इत्येकाक्षरी । अम्भोरुहं पङ्कजम्, ददाति अर्पयति । अत्र 'अये' इति सम्प्रदानम् । इ-शब्दस्य 'घेर्ङिति' इत्यनेन गुणे रूपमिदम् ॥ १४ ॥

प्रशस्त्यायिति । गुणरत्नालय प्रभो ! स्वामिन्, उक्तमार्गस्य विहितनयस्य, सदाचरणशीलस्येति यावत् । तव, सम्मानितां आदरणीयताम्, श्रिताः प्राप्ताः, के नाम प्रशस्त्यै श्लाघायै, तवेति शेषः । 'एचोऽयवायावः' इत्यनेनाऽऽयादेशे 'लोपः शाकल्यस्ये'ति अवर्णपूर्वयलोपस्य वैकल्पिकत्वात् प्रकृते न लोपः । न स्पृहयन्ति नाभिलषन्ति, काक्वा सर्वेऽपि स्पृहयन्त्येवेत्यर्थः । 'स्पृहेरीप्सितः' इति प्रशस्तिशब्दस्य सम्प्रदानत्वम् । 'प्रशस्त्यायुक्तमार्गस्थ' इति पाठान्तरे प्रशस्त्यै उक्तमार्गस्थ शास्त्रोक्तमार्गे विद्यमानेति सम्बोधनम् । एवं 'सम्मानिताश्रित' इति पाठान्तरे सम्मानिताः आदृताः, आश्रिताः अवलम्बिताः, अनुजीविन इति यावत्, येन तत्सम्बुद्धौ इति योजनीयम् ॥ १५ ॥

अपादानगुप्तम्

शिलीमुखैरिति । वीर ! त्वया दुर्वारैः दुःसहैः, शिलीमुखैः बाणैः, 'अलिबाणौ शिलीमुखौ' इत्यमरः । निर्जितः निगृहीतः, रिपुः शत्रुः, कुसुमा-

बिभेत्यत्यन्तमलिनो वनेऽपि कुसुमाकुले ॥ १६ ॥

सरसीतोयमुद्धृत्य जनः कन्दर्पकारकम् ।
पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥ १७ ॥

सम्बन्धगुप्तम्

भानुर्वै जायते लक्ष्म्या सरस्वत्याऽथवा मता ।
अत्र षष्ठीपदं गुप्तं मर्यादा दशवार्षिकी ॥ १८ ॥

---

कुले पुष्पभरिते, वने अरण्ये, अलिनोऽपि भ्रमरादपि, 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः । द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥' इति भ्रमरपर्यायेष्वमरः । तथा च 'अलिन्' 'अलिः' इति इन्नन्तमिदन्तञ्च शब्दद्वयं भ्रमरवाचकम् । अत्यन्तं नितान्तम्, बिभेति त्रस्यति, अलिनोऽपि शिलीमुखत्वादिति भावः । 'भीत्रार्थानां भयहेतुः' इति भयहेतुत्वादपादानत्वम् ॥ १६ ॥

सरसीत इति । अयं जनः पुरोवर्त्ती कश्चित् 'सरसीतः' सरसः, पञ्चम्यास्तसिल् । उद्धृत्य उन्नमय्य, दर्पकारकं मदजनकम्, अम्भोजसुरभि पङ्कजपरिमलम्, पङ्कजसम्बन्धात् सुगन्धीति भावः । स्वच्छं निर्मलम्, एकान्तशीतलं नितान्तशीतम्, 'तुषारः शीतलः शीतः' इत्यमरः । कं जलम्, 'कं वारिणि च मूर्धनी'ति नानार्थेऽमरः । पिबति ॥ १७ ॥

सम्बन्धगुप्तम्

भानुरिति । 'नुः' नरस्य, 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः । 'ऋत उत्' इत्यनेनोत्वे नृशब्दस्य षष्ठ्यां रूपम् । लक्ष्म्या सम्पत्त्या, 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः । अथवेति विकल्पे, सरस्वत्या विद्यया, मता अभीष्टा, भा प्रभा, 'स्युः प्रभा रुग् रुचिस्त्विड्भा भाश्छवि' इत्यमरः, तेज इति यावत् । जायते वै सम्पद्यते खलु । अत्रापि तुरीयचरणस्थं 'दशवार्षिकी'ति पदं पूर्वोक्तदिशा चिन्त्यम् । 'यो जानाति स पण्डितः' इति परिवर्त्य पठनीयम् ॥ १८ ॥

तूणेव मधुमासेऽस्मिन् सहकारद्रुमञ्जरी ।
इयमुन्निद्रमुकुलैर्भाति न्यस्तशिलीमुखा ॥ १९ ॥
प्राप्तमदो मधुमासः प्रबला रुक्प्रियतमोऽपि दूरस्थः ।

---

तूणेति । अस्मिन् वर्तमाने, मधुमासे चैत्रमासे, 'स्याच्चैत्रे चैत्रिको मधुरि'त्यमरः । उन्निद्रमुकुला विकसितकुड्मला, 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । बहुव्रीहिः । इयं सहकारद्रोः रसालवृक्षस्य, 'द्रुद्रुमागमाः' इत्यमरः। मञ्जरी वल्लरिः, 'वल्लरिर्मञ्जरिः स्त्रियौ' इत्यमरः । 'कृदकारादक्तिनः' इत्यनेन ङीबन्तोऽपि । 'एः' कामस्य, न्यस्तशिलीमुखा निहितबाणा तूणेव इषुधिरिव, 'तूणेषुधी उपासङ्ग' इति रत्नकोशः । भाति शोभते । 'न्यस्तशिलीमुखे'ति विशेषणं मञ्जरीपक्षेऽपि सुयोजम् । तत्पक्षे शिलीमुखा मधुकराः । आम्रकुसुमं हि भगवतः कुसुमायुधस्यान्यतम इषुः, उद्दीपकत्वात्परमं सेनाङ्गम् ॥ १९ ॥

प्राप्तेति । मिमीते आनन्दमिति माः चन्द्रः, 'मास्‌शब्दः केवलोऽपीह संमतो बहुदृश्वनाम्' इत्युत्पलिनीति चन्द्रमश्शब्दव्याख्याया अवसरे व्याख्यासुधायां भानुजिदीक्षितोऽमरकोषे । मासः चन्द्रस्य, अदः मधु मद्यत्वेन क्षौद्रत्वेन वाऽध्यवसिता वा ज्योत्स्ना, प्राप्तं सन्निहितम्, राकारात्रित्वादिति भावः। 'मधु मद्ये पुष्परसे क्षौद्रेऽपी'त्यमरः । प्रबला उत्कटा, रुक् कामपीडा, अस्ति । चन्द्रोदयस्योद्दीपकत्वादिति भावः । अथवा 'पद्दन्नोमास्' इत्यादिना मासशब्दस्थान आदिष्टमास्‌-शब्दस्य षष्ठी । तथा च मासः चैत्रस्य, वसन्ततोरिति यावत् । जन्यजनकभावरूपसम्बन्धः षष्ठ्यर्थः । तज्जन्या प्रबला रुक् मान्मथो व्याधिः, वसन्तस्योद्दीपकत्वादिति भावः । 'स्त्री रुग्रुजे'त्यमरः । एवं मधु मद्यम्, प्राप्तं गृहीतम्, पीतमिति यावत् । प्रियतमोऽपि अतिशयेन प्रियोऽपि उपस्थितमदनव्याधिचिकित्सकः, दूरस्थः विप्रकृष्टे वर्तते, 'स्याद्दूरं विप्रकृष्टकम्' इत्यमरः । सन्निहिता समीपस्था, संहृतशीला लुप्तसद्वृत्ता, 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । इयं सखी वयस्या, नियतं निश्च-

असती संनिहितेयं संहृतशीला सखी नियतम् ॥ २० ॥

अधिकरणगुप्तम्

या कटाक्षच्छटापातैः पवित्रयति मानवम् ।
एकान्ते रोपितप्रीतिरस्ति सा कमलालया ॥ २१ ॥

विपद्यमानता सिद्धा सर्वस्यैव निरूष्मणः ।
यथाऽत्र भस्म पद्भ्यां च निर्वाणं हन्त्ययं जनः ॥ २२ ॥

---

येन, असती कुलटा, 'असती कुलटेत्वरी' इत्यमरः । अहो अनर्थंपरम्परा 'मर्कटस्य सुरापानं मध्ये वृश्चिकदंशनम् । तन्मध्ये भूतसञ्चारो यद्वा तद्वा भविष्यति ॥' इतिवत् । अतश्चानिच्छन्त्याऽपि मयोपस्थितानर्थंपरम्पराप्रतीकाराय उपपतिरेव शरणीकरणीय इति गूढाभीष्टे सन्निहितचतुरस्रसामग्रीपरवत्तयेदमापतितमिति निर्वेदच्छलं व्यज्यते ॥ २० ॥

अधिकरणगुप्तम्

येति । या विशेष्यानुरोधात् लक्ष्मीः, मानवं मनुष्यम् , कटाक्षच्छटापातैः अपाङ्गावलोकनपरम्पराभिः, पवित्रयति पावयति, 'तत्करोति तदाचष्टे' इति णिच् । 'अस्मान् पश्याब्धिकन्ये सरसिरुहरुचामन्तरङ्गैरपाङ्गैः' इति प्रार्थ्यमानत्वादिति भावः । सा कमलालया श्रीः, 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः । 'ए' कृष्णे, कान्ते, 'अकारो वासुदेवः स्यादि'त्येकाक्षरी । रोपिता निवेशिता प्रीतिः अनुरागः यया सैवंभूता, अस्ति ॥ २१ ॥

वीति । निर्गतः ऊष्मा द्रव्यरूपमुष्णत्वं यस्मात्तस्य तथोक्तस्य, सर्वस्यैव समस्तस्यैव लोकस्य, 'विपदि' दारिद्र्यरूपे संकटे, अमानता अनादरः सिद्धा निश्चिता, यथा अत्र अस्मिन् लोके, अयं जनः, समुदायैकवचनम् । निर्वाणं शान्तम् ; अग्निरहितमिति यावत् । भस्म भसितम् , पद्भ्यां हन्ति संहरति, स्पृशतीत्यर्थः । निरूष्मत्वात् भस्म पदा स्पृश्यते, तदेव सोष्म दूरात्प्रणम्यते एवमेव सधने निर्धने जातेऽवहेल्यत इति भावः ॥ २२ ॥

सम्बोधनगुप्तम्

पिबतस्ते शरावेण वारि कह्लारशीतलम् ।
केनेमौ दुर्विदग्धेन हृदये संनिरोपितौ ॥ २३ ॥
सर्वज्ञेन त्वया किंचिन्नास्त्यविज्ञातमीदृशम् ।
मिथ्यावचस्तथा च त्वमसत्यं वेत्सि न क्वचित् ॥ २४ ॥
कमले कमले नित्यं मधूनि पिबतस्तव ।

---

सम्बोधनगुप्तम्

पिबत इति । हे 'एण' हे मृग ! कह्लारशीतलं सौगन्धिकपुष्पैः शीतम्, वारि तोयम् पिबतः आचामतः, शतू रूपम् , ते हृदये वक्षसि, दुर्विदग्धेन दुष्टेन असहृदयेन, केन अनिर्दिष्टनामधेयेन पुरुषेण ब्रह्मणा वा 'कः प्रजापतिरुद्दिष्टः' इत्येकाक्षरी । इमौ दृश्यमानौ, शरौ बाणौ, संनिरोपितौ उप्तौ, संनिवेशिताविति यावत् । निर्दयेन दैवेनैवेदं परुषमाचरितमिति भावः ॥२३॥

सर्वेति । सर्वं जानन्तीति सर्वज्ञाः, तेषु 'इन' ! श्रेष्ठ ! 'इनः सूर्ये प्रभौ' इत्यमरः । त्वया अविज्ञातं अविदितम् , ईदृशं ईदृग्विधं उत्तरार्धे वक्ष्यमाणं, किञ्चित् किमपि, नास्ति, तथा च त्वं असत्यं अनृतम् , क्वचित् कदाऽपि, न वेत्सि न जानासि, इति मिथ्यावचः अलीकवचनम् , सर्वज्ञेनेन सर्वपदवाच्यान्तर्गतं मिथ्यावचोऽपि ज्ञातव्यमेव, अन्यथा सर्वज्ञत्वं तत्रापि स्वामित्वं व्याहन्येतेति भावः। 'परस्ताद्दास्यामि परस्ताद्दास्यामि' इति मिथ्यासमाश्वासनेन मां परितोषयसीति याचककृत उपालम्भो व्यज्यते ॥२४॥

कमल इति । हे 'अले' भ्रमर ! कमले पङ्कजे, मधूनि मकरन्दान्, 'मधु मद्ये पुष्परसे क्षौद्रेऽपी'त्यमरः। कं सुखं यथा तथेति क्रियाविशेषणम् । 'कं सुखं च प्रकीर्तितम् ।' इत्येकाक्षरी । नित्यं अविच्छेदेन पिबतः आस्वादयतः, तव, दोषाकरस्य चन्द्रस्य, दोषेत्यव्ययं रात्रिवाचकम् , उदये प्रादुर्भावे, चन्द्रोदयसमय इत्यर्थः । दोषाणामाकरस्य उदयेऽभ्युदये तत्सम्पर्किणः कष्टं ननम् ।

भविष्यति न सन्देहः कष्टं दोषाकरोदये ॥ २५ ॥
बटवृक्षो महानेष मार्गमावृत्य तिष्ठति ।
तावत्त्वया न गन्तव्यं यावन्नान्यत्र गच्छति ॥ २६ ॥

सन्धिगुप्तम्

न मया गोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि ।
अस्थानरुदितैरेतैरलमालोहितेक्षणे ॥ २७ ॥

---

कष्टं क्लेशः, भविष्यति, न सन्देहः । पिबत इत्यत्रत्येन शतृप्रत्ययेन कमले स्थित्वा मकरन्दमास्वादयत एव तव चन्द्रोदये जाते कमलनिमीलनस्यावश्यम्भावितया तत्र विद्यमानस्य मधुमत्तस्य तवापि दण्डापूपिकान्यायेन बन्धनदुःखमनिवार्यं सम्पत्स्यते इति द्योत्यते ॥ २५ ॥

बटवृक्ष इति । 'बटो' ! माणवक ! एष महान्, ऋक्षः भल्लूकः 'ऋक्षाच्छभल्लभल्लूका' इत्यमरः । मार्गं पन्थानम्, आवृत्य निरुद्ध्य, तिष्ठति वर्तते । अतः, यावत् अन्यत्र, मार्गादिति शेषः । न गच्छति, तावत् त्वया न गन्तव्यम्, इत्यन्वयः ॥ २६ ॥

सन्धिगुप्तम्

नेति । मे चेतः मनः, आगसः अपराधस्य, 'आगोऽपराधो मन्तुश्च' इत्यमरः । रसाभिज्ञं स्वादवित्, 'रसो गन्धरसे जले ।......देहधातुप्रभेदे च पारदस्वाद्योः पुमान्' इति मेदिनी । न । मे-आगो इत्यवस्थायां 'एचो यवायाव' इति अयादेशे रूपम् । अयि, आलोहिते ईषद्रक्ते, मानादिति भावः, ईक्षणे नयने यस्यास्तत्सम्बुद्धौ । अस्थाने रुदितैः अनुचितक्रन्दनैः, 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । अलम्, निषेधे 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इति । नानार्थपर्यायेष्वमरः ॥ २७ ॥

समासगुप्तम्

विषादी भैक्षमश्नाति सदा रोगं न मुञ्चति ।
रुष्टेनापि त्वया वीर शंभुनाऽरिः समः कृतः ॥ २८ ॥
नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ।

---

समासगुप्तम्

विषादीति । विषादः अस्यास्तीति विषादी खिन्नः, विषमत्तीति विषादीति तत्पुरुषः शम्भुपक्षे । भैक्षं अश्नाति भुङ्क्ते । उभयत्रापि । 'भैक्षं भिक्षाकदम्बकम्' इत्यमरः । समूहार्थेऽण् । सदा अनवरतम्, रोगं न मुञ्चति न त्यजति, सदा तत्पीडित एवाऽऽस्ते । शम्भुपक्षे तु दारैः सह वर्तमानः, इति बहुव्रीहिः । यत्त्वत्र तत्पुरुषसमास इति सु० भाण्डागारस्थटिप्पनी, सेयं चिन्त्याऽनास्थेया; 'तेन सहेति तुल्ययोगे' इत्यनेन विहितस्य समासस्य बहुव्रीहिसंज्ञकत्वात् । सदारः सपत्नीकः, 'भार्या जायाऽथ पुंभूम्नि दाराः' इत्यमरः । अगं कैलासपर्वतम्, 'शैलवृक्षौ नगावगौ' इत्यमरः । न मुञ्चति न जहाति । हे वीर ! एवं रीत्या, रुष्टेनापि कुपितेनापि, शत्राविति शेषः । अपिना का कथा तुष्टेनेति व्यज्यते । शत्रावियमुदारता, मित्रे तु किमु कथनीयम् । त्वया अरिः शत्रुः, शम्भुना, शिवेन, समः समानः, विषादित्वादिसाधर्म्येणेति भावः । कृतः विहितः । समङ्गश्लेषः ॥ २८ ॥

नित्यमिति । नित्यं देवैः सुरैः, आराधिता सेविता, नित्यं मया लक्ष्म्या 'इन्दिरा लोकमाता मा' इत्यमरः । किञ्च नित्यं मा लक्ष्मीर्यस्यां सा 'नित्यमा' बहुव्रीहिः । मण्डलाग्रे विपक्षसमक्षम्; अथवा 'वैष्णवं समपादं च वैशाखं मण्डलं तथा । प्रत्यालीढमथाऽऽलीढं स्थानान्येतानि षड् नृणामि'ति रभसोक्त-धन्विचरणन्यासविशेषस्य अग्रे अभिमुखम् । अथवा मण्डलाग्रमिति पाठः कल्पनीयः । मण्डलाग्रं खड्गम्, 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः । वस्तुतस्तु विष्णोश्चतुर्षु भुजेषु चक्रशङ्खगदापद्मानि सन्तीति 'चक्र-

मण्डलाग्रे गदां शङ्खं चक्रं जयति बिभ्रती ॥ २९ ॥

लिङ्गगुप्तम्

नितान्तस्वच्छहृदयं सखि प्रेयान्समागतः ।

त्वां चिराद्दर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ३० ॥

कलिकालमियं यावदगस्त्यस्य मुनेरपि ।

---

शङ्खगदापद्मधरो ध्येयः' इत्यादिध्यानश्लोकेषु श्रूयते । तदनुसारेण 'पङ्केरुहं' इति पदं 'मण्डलाग्रे' इत्यत्र पठनीयम् । अमरसिंहस्तु 'शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनः । कौमोदकी गदा खड्गो नन्दक' इत्यत्र भगवदायुधेषु खड्गं परिगणयति पद्मं नेच्छति । गदां शंखं चक्रं बिभ्रती धारयन्ती, 'नाभ्यस्ताच्छतुरि'ति नुम्निषेधः । कंसस्य स्वमातुलस्य, द्विषतः शत्रोः, 'द्विषद्द्वेषणदुर्हृदः' इत्यमरः । तनुः मूर्तिः, 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । जयति सर्वोत्कर्षेण वर्तते ॥ २९ ॥

लिङ्गगुप्तम्

नितान्तेति । सखि ! नितान्तं एकान्तं स्वच्छं प्रसन्नम्, परनायिकासक्तिशून्यं त्वदेकनिष्ठमिति भावः । हृत् हृदयम्, यस्य सः, 'स्वान्तं हृन्मानसं मनः' इत्यमरः । अयं बुद्धिस्थः पुर आगच्छन् वा, प्रेयान् अतिशयेन प्रियः, समागतः आयातः । यः, दर्शनप्रीत्या अवलोकनजानुरागेण, त्वां समालिङ्ग्य समाश्लिष्य, चिरात् चिरम्, विभक्तिप्रतिरूपकमव्ययम् । रंस्यते क्रीडिष्यति, अत्राऽऽपततो हृदयान्तं क्रियाविशेषणत्वेनापि प्रतिभातीति पुल्लिङ्गगोपनाद् लिङ्गगुप्तमिति ॥ ३० ॥

कलीति । शशिखण्डानुकारिणी अर्धचन्द्रसदृशी, वक्रत्वोज्ज्वलत्वादि साधर्म्यम् । इयं पुरो विद्यमाना, अगस्त्यस्य अगस्त्याख्यवृक्षस्य, 'कलिका' कोरकः, 'कलिका कोरकः पुमानि'त्यमरः । मुनेरपि मननशीलस्य ऋषेरपि, मनुते इति

मानसं खण्डयत्यत्र शशिखण्डानुकारिणी ॥ ३१ ॥

गुप्ताशुद्धं पद्यम् ( प्राचीनम् )

रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग् धिक् ।
अस्मिन् पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग् धिक् ॥

---

मुनिः, 'मनेरुच्च' इत्यनेनोपधाया उत्त्वम् । अपिना साधारणस्य का कथेति व्यज्यते । मानसं चित्तम्, अत्र अस्मिन् काले वने वा, यावत् पूर्णतया, 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । अलं खण्डयति कदर्थयति । उद्दीपकत्वात्कामविकारदूषितं विदधातीति भावः । अत्र 'कलिका' इति स्त्रीलिङ्गगोपनाद् लिङ्गगुप्तम् । पूर्वोदाहरणे विशेषणं निगूहितमिह तु विशेष्यमिति भेदः । लिङ्गवैलक्षण्यमपि । अगस्त्यशब्दोऽत्र श्लिष्टः ॥ ३१ ॥

गुप्ताशुद्धं पद्यम् ( प्राचीनम् )

राममिति । यो नरः, जीविकार्थे वृत्त्यर्थम्, रामं रामप्रतिकृतिम्, चित्रं प्रतिमां वा, एवमग्रेऽपि। सीतां जानकीप्रतिकृतिम्, लक्ष्मणं सौमित्रिप्रतिकृतिम्, विक्रीणीते पणयति, 'परिव्यवेभ्यः क्रिय' इत्यात्मनेपदम् । तं तादृशमुपास्यदेवताप्रतिमाविक्रेतारं धिग् धिक् । न्यक्काराहः स इति भावः । अस्मिन् पद्ये श्लोके, यः, अपशब्दान् अशुद्धप्रयोगान् । 'इवे प्रतिकृतौ' इत्यनेन विहितस्य कनः 'जीविकार्थे चापण्ये' इत्यनेन लोपोऽपण्यस्थल एव विधीयते, न तु प्रकृत इव पण्यत्वे । तथाच 'रामकं सीतकां लक्ष्मणकम्' इति प्रयोक्तुं युक्तम् । सीतकामि'त्यस्य क्षिपकादित्वेन 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इत्यनेनेत्त्वं न प्रसज्यते । न वेत्ति न जानाति । व्यर्था मोघा, ज्ञातव्यज्ञानसामर्थ्यविधुरेति यावत् । प्रज्ञा बुद्धिर्यस्य तं तादृशं पण्डितं विद्वांसम्, पण्डितेतिरूढनामानमिति भावः । धिग् धिक् ॥ ३२ ॥

### क्रियागुप्तम्

प्रातः प्रातः समुत्थाय द्वौ मुनी च कमण्डलू ।
अत्र क्रियापदं वक्तुमवधिर्ब्रह्मणो वयः ॥ ३३ ॥

पम्पासरसि रामेण सस्नेहं सविलासया ।
सीतया किं कृतं सार्धमत्रैवोत्तरमीक्ष्यताम् ॥ ३४ ॥

कान्तया कान्तसंयोगे किमकारि नवोढया ।

---

### क्रियागुप्तम्

प्रातरिति । द्वौ मुनी, प्रातः प्रभाते, रेफान्तमव्ययम् । समुत्थाय उद्बुद्ध्य, कमण्डलू कुण्डयौ, पात्रविशेषौ । 'अस्त्री कमण्डलुः कुण्डी' इत्यमरः । प्रातः पूरयतः, प्रा-पूरणे लटि प्रथमद्विवचनम् । अत्र पद्येऽस्मिन्, क्रियापदं वक्तुं ब्रह्मणो वयः आयुस्समयः परार्धरूपः, सुदीर्घकाल, इति यावत् । अवधिः सीमा । कवेराशय आजीवनं विचारे क्रियमाणेऽपीदं क्रियापदं न स्फुरेदेवेति ॥ ३३ ॥

पम्पेति । पम्पासरसि एतन्नामकप्रसिद्धसरस्याम्, हंसविलासया हंसविभ्रमया हंसगमनयेत्यर्थः । सीतया जानक्या, सार्धं सह, 'सार्धं तु साकं सत्रा समं सह' रामेण किं कृतम्, किमिति प्रश्ने । अत्रैव अस्मिन्नेव पद्ये उत्तरं 'सस्ने' स्नानं कृतम्, इत्याकारकम् । 'ष्णा शौचे' इत्यस्य भावे लिटि रूपम् । ईक्ष्यताम् दृश्यताम्, प्रश्नकुक्षावेव सविलासया सीतया सार्धं सस्नेहं किं कृतमिति सुयोजम् ॥ ३४ ॥

कान्तयेति । नवोढया नूतनविवाहिततया, मुग्धयेति यावत् । कान्तया रमण्या, कान्तसंयोगे । प्रियसङ्गमे किं अकारि, किं कृतमिति प्रश्नः । अत्रापि अस्मिन्नपि प्रश्ने पद्ये वा, उत्तरं 'अत्रापि' लज्जितम्, इत्याकारकम्, त्रपुष्—लज्जायामित्यस्य भावे लुङ् । यत्त्वत्र 'कर्मणि लुङ्' इति सु० माण्डा-

अत्रापि चोत्तरं वक्तुमवधिर्ब्रह्मणो वयः ॥ ३५ ॥
अम्लानपङ्कजा माला कण्ठे रामस्य सीतया ।
मुधा बुधा भ्रमन्त्यत्र प्रत्यक्षेपि क्रियापदे ॥ ३६ ॥
पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः ।
सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥ ३७ ॥
बिम्बाकारं सुधाधारं कान्तावदनपङ्कजम् ।

---

गारस्थटिप्पनी; सा मृग्या, त्रपुष् धातोरकर्मकत्वात् । वक्तुं महती कालमर्यादा । न चात्राकारीत्यस्यैवागुप्तक्रियापदत्वमस्त्विति शङ्क्यम्, तस्य प्रश्नपरत्वेनोत्तरस्यापेक्षितत्वात् ॥ ३५ ॥

अम्लानेति । सीतया रामस्य कण्ठे, अम्लानानि प्रत्यग्राणि पङ्कजानि यस्याः सा तथोक्ता, माला स्रक्, प्रत्यक्षेपि समर्पिता, क्षिपू-प्रेरणे इत्यस्य कर्मणि लुङीदं रूपम् । अत्र अस्मिन्नर्थे, क्रियापदे प्रत्यक्षेऽपि स्पष्टेऽपि, बुधाः विद्वांसः, मुधा व्यर्थम्, 'व्यर्थके तु वृथा मुधा' इत्यमरः । भ्रमन्ति मुह्यन्ति । तद्वा एतद्वा इति चिन्तयन्तीत्यर्थः । अत्रापि भ्रमन्तीत्यस्यैव क्रियापदत्वमस्त्विति नैव चोद्यम्, मालेत्यस्यानन्वितत्वापत्तेः ॥ ३६ ॥

पुंस्कोकिलेति । वसन्ते, एते रम्याः रमणीयाः, सहकारद्रुमाः रसालतरवः, पुंस्कोकिलानां पुरुषपिकानाम्, कुलस्य समुदायस्य, आरवैः ध्वनिभिः, कामपि लोकोत्तराम् श्रियं शोभाम्, 'अधुः' बिभ्रति स्म । डुधाञ्-धारणपोषणयोरित्यस्माल्लुङि रूपमिदम् । आपाततो 'मधुरारवैः' मधुरध्वनिभिरिति प्रतिभाति । वसन्ते कोकिला माद्यन्ति, आम्रेषु पञ्चमस्वरेण नदन्तीति प्रसिद्धमेव ॥ ३७ ॥

बिम्बेति । बिम्बस्य चन्द्रमण्डलस्य, 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः। आकारस्येव आकारो वर्तुलत्वादिर्यस्य तत्तथोक्तम्, सुधाया अमृतस्य, आधारं

अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ ३८ ॥

राघवस्य शरैर्घोरैर्घोररावणमाहवे ।
अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ ३९ ॥

पामारोगाभिभूतस्य श्लेष्मव्याधिनिपीडित ।
यदि ते जीवितस्येच्छा तदा भोः शीतलं जलम् ॥ ४० ॥

---

आश्रयम्, अधरामृतनिधिमित्यर्थः । कान्तावदनपङ्कजं प्रेयसीमुखकमलम्, 'दश' चुम्बस्व, अत्र अस्मिन्नुत्तरार्धे, क्रियापदं गुप्तं वार्षिकी वत्सरपरिमिता, मर्यादा अवधिः, अन्वेषणायेति शेषः । 'दशवार्षिकी' त्येतद् मर्यादाविशेषणत्वेन स्फुरति सहसा । बिम्बाकारमिति निरुपपदबिम्बपदस्वारस्यात् दशेति निर्देशानुरोधाच्च 'कान्तावदनपङ्कजे' इति पाठो वरीयान् । तथा च कान्तावदनपङ्कजे बिम्बाकारं बिम्बफलसदृशम्, सुधाधारं पीयूषनिधानम्, अधरं दश खण्डय, इत्यन्वयः । नन्वत्र प्रियतमाधरदंशनरूपे कार्ये कथं प्रवृत्तिः, प्रवृत्तिं प्रति बलवदनिष्टाननुबन्धीष्टसाधनताबुद्धेः प्रकृतस्थले दुःखप्रयोजकत्वनिश्चयेन प्रतिबद्धत्वादिति अनाराधितशृङ्गाररसेन विरसं नानुयोज्यम् । कामकेलौ कामिनोर्नखदन्तक्षतादीनामितरवैलक्षण्येनामन्दानन्दसन्दोहनिस्यन्दित्वानुभवादिष्टसाधनताबुद्धेर्निष्प्रत्यूहं जागरूकत्वादिति दिक् ॥ ३८ ॥

राघवेति । हे राघव ! राम ! आहवे युद्धे, 'संग्रामाभ्यागमाहवाः ।' इत्यमरः । घोररावणं भयङ्कररावणम् । घोरैः शरैः 'स्य' मारय, षोऽन्तकर्मणीत्यस्माद्दिवादित्वात् श्यनि लोटि मध्यमैकवचनम् ॥ ३९ ॥

पामेति । श्लेष्मव्याधिनिपीडित ! कफरोगोपद्रुत ! रोगेण व्याधिना, अभिभूतस्य पीडितस्य, ते, जीवितस्य जीवनस्य, यदि इच्छा अभिलाषश्चेत्, तदा भोः ! शीतलं जलं मा 'पाः' मा पिब, 'माङि लुङ्' इति लुङ् । 'न माङ्योगे' इत्यडागमप्रतिषेधः । शीतजलस्य कफवर्धकत्वात्तत्पाने न जीविष्यसीति भावः ॥ ४० ॥

कान्तं विना नदीतीरं मदमालोक्य केकिनी ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ४१ ॥

दामोदराय पुण्यात्मन् ! पुष्पमूलफलान्यपि ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ४२ ॥

निरुद्यमानवद्याङ्गयाचकान् दुःखसंचयान् ।
अत्र क्रियापदं गुप्तं वेत्सि चेद् वद शाब्दिक ! ॥ ४३ ॥

ललाटतिलकोपेतः कृष्णः कमललोचनः ।

---

कान्तमिति । केकिनी मयूरी, इरंमदं मेघज्योतिः, इरया जलेन माद्यति उज्जृम्भत इति व्युत्पत्तिः 'मेघज्योतिरिरंमदः' इत्यमरः । आलोक्य वीक्ष्य कान्तं प्रियम्, विनानदीति भृशं पुनःपुनर्वा शब्दायते, णद–'अव्यक्ते शब्दे' इत्यस्य यङ्लुकि लटो रूपम् । मेघमुद्दीपकं विलोक्य विलम्बमसहमाना शिखिनी पुनःपुनः प्रियमामन्त्रयत इति भावः ॥ ४१ ॥

दामोदरेति । पुण्यात्मन् सुकृतिन्, दामोदर तन्नामक !, पुष्पमूलफलानि, अपि 'आय' आनय, 'इटकिटकटी' इत्यत्र प्रश्लिष्टस्याङुपसृष्टस्य ईधातो लोटि मध्यमस्य रूपमिदम् धातूनामनेकार्थकत्वात् ॥ ४२ ॥

निरुद्यमानिति । अङ्ग ! सम्बाधनेऽव्ययम् । 'स्युः प्याट् पाडङ्ग हे है भोः' इत्यमरः । निरुद्यमान् उद्योगरहितान्, वृत्तिहीनानिति भावः । 'अव' रक्ष, दुःखसञ्चयान् क्लेशराशीन्, 'द्य' खण्डय, दो–अवखण्डने इत्यस्माद्दैवादिकाल्लोटि मध्यमैकवचनम् ॥ ४३ ॥

ललाटेति । तिलकेन विशेषकेण, 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः, उपेतः युक्तः, कमललोचनः पद्मनयनः, कृष्णः, गोकुले,

गोकुलेऽत्र क्रियां वक्तुं मर्यादा दशवार्षिकी ॥ ४४ ॥
विराटनगरे रम्ये कीचकादुपकीचकम् ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ४५ ॥
नारसिंहाकृतिं वीक्ष्य वने मत्तमतङ्गजः ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ४६ ॥
सन्ध्यावन्दनवेलायां तडागान्ते द्विजोत्तमैः ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ४७ ॥

---

ललाट चिक्रीड । 'लट-बाल्ये' इत्यस्य लिटीदं रूपम् । आपाततो ललाटे यत् तिलकमिति सम्बन्धः प्रतिभाति ॥ ४४ ॥

विराटेति । रम्ये सुन्दरे, नगरे कीचकात्, वेणुविशेषात् । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । उपकीचकम् वंशसमीपे, 'अव्ययमि'त्यादिना अव्ययीभावः । विः पक्षी, 'नगौको वाजिविकिरवि-विष्किर-पतत्रयः' इत्यमरः । 'वा-गतौ' 'वातेर्डिच्च' इतीण् । आट चचाल, अटपट-गतावित्यस्माल्लिटीदं रूपम् ॥ ४५ ॥

नारेति । मत्तमतङ्गजः क्षीबो हस्ती, 'मत्ते शौण्डोत्कटक्षीबाः' 'मतङ्गजो गजो नागः' इत्युभयत्रामरः । वने, सिंहस्येव आकृतिं आकारम्, वीक्ष्य अवलोक्य, न आर न ययौ, तत्समीपमिति शेषः । 'ऋ' गतिप्रापणयोरित्य-स्मात् कर्तरि लिटो रूपम् ॥ ४६ ॥

सन्ध्येति । हे द्विजोत्तम विप्रवर्य ! सन्ध्यावन्दनस्य सन्ध्योपासनायाः, वेलायां समये, 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः । तडागान्ते पद्माकरसमीपे, तडाग-तटाक-तटाग-शब्दाः समानार्थकाः सन्ति । तत्राऽऽदिमः 'तड आघाते' 'तडागादयश्च' इति निपातितः, द्वितीयतृतीयौ 'अक अग कुटिलायां गतौ' तटं अकति, अगति वा, कर्मण्यण् । ऐः अगच्छः, इण्-गतावित्यस्माल्लङि मध्यमैकवचनम् ॥ ४७ ॥

## कूटानि

अम्बरमम्बुनि पत्रमरातिः पीतमहीनगणस्य ददाह ।

---

❀ श्रीरामभद्रः शरणम् ❀

गोस्वाम्यन्वयभास्करान् बुधनुतान् दामोदरार्यान्
पुनस्तन्त्रेष्वप्रतिबद्धबोधविभवान्वन्दे महादेशिकान् ।
श्रीमच्चित्रपुरेश्वरान्यतिवरान् मध्वाध्वपान्थांश्च तान्
विद्यापूर्णगुरूनतन्द्रमनसा ह्यद्धा यथार्थाभिधान् ॥

अम्बरमिति । यस्य भगवतः श्रीकृष्णस्य, अम्बरं वस्त्रम्, 'अम्बरं व्योम्नि वाससी' त्यमरः । पीतं हरिद्रावर्णम्, विष्णोः पीताम्बरत्वात् । गृहं भवनम्, अम्बुनि जले, समुद्रशायित्वात् । पत्रं वाहनम्, 'पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः' इति मेदिनी, अहीनां सर्पाणाम्, इनाः स्वामिनः, तेषां गणस्य समुदायस्य, सर्पजातेरिति यावत्, अरातिः शत्रुः, गरुडः । यस्य वधूः पत्नी, 'वधूर्जाया स्नुषा स्त्री चे'त्यमरः । वहति उह्यते वा, 'वहो धश्च' इत्यूः, ( उणादिः ) अब्जा लक्ष्मीः, समुद्रदुहितृत्वात्, अप्सु जायते इति, 'सप्तम्यां जनेर्डः' स्त्रीत्वविवक्षायां 'अजाद्यतष्टाप्' । तनयं पुत्रं मन्मथम्, सर्वत्र यस्येति सम्बन्धिवाचकमनुषञ्जनीयम् । हरलोचनस्य शंकरनयनस्य, वह्निः अनलः, 'राहोः शिरः' इतिवदभेदेऽपि भेद उपचर्यते। भगवतो भवस्य लोचनानां सूर्याचन्द्राग्निरूपत्वात् । अथवा हरलोचनमेव वह्निरिति कर्मधारयः । ददाह ज्वलयामास, वस्तुतः करणभूतस्य वह्नेः कर्तृत्वोपचारः सकलसंसारसंहरणनिपुणस्य हरस्य मन्मथमथनं नाम सिंहस्य मशकहननमिवानायाससिद्धमिति द्योतयितुम् । सः कृष्णः, वः युष्मान्, पातु अवतु, प्रार्थनायां लोट् । कस्यचिन्मते यद्यप्यत्र पद्येऽर्थान्तरपदापेक्षित्वरूपो दोष उन्मिषति, तथाऽपि कूटकाव्ये शब्दार्थान्यतरच्छलस्य धोरण्या विवक्षितार्थस्य निगूहनीयत्वात्.

यस्य वधूस्तनय गृहमञ्जा पातु स वो हरलोचनवह्निः ॥ ४८ ॥

कुन्दकुञ्जममुं पश्य सरसीरुहलोचने ।
अमुना कुन्दकुञ्जेन सखि मे किं प्रयोजनम् ॥ ४९ ॥

---

च्युतसंस्कारादिव्यतिरिक्तदोषाणां न हेयत्वम् । रसस्य कूटेषु वैधुर्याभ्युपगमात्तदपकर्षकस्य दोषस्य 'सति कुड्ये चित्रकर्मे'ति न्यायप्राहतत्वात् । तत्र भवद्भिर्मम्मटभट्टैः 'वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ' इति दोषाणामपि प्रसङ्गविशेषे दोषाङ्कुशत्वस्य प्रतिपादनाच्चेत्यन्यत्र विस्तरः। यद्यपि 'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलश्रृङ्गे सीराङ्गे कूटमस्त्रियामि' त्यभिधानाद् 'व्युत्पत्तिप्रदर्शन'गतपद्येषु शब्दार्थान्यतरच्छलरूपकूटत्वस्यानुगतत्वात् कृत्स्नोऽप्ययं ग्रन्थः कूटपदव्यपदेश्यतामप्यर्हति, तथाऽपि कूटत्वव्याप्यतावच्छेदककर्तृगुप्तत्वादिसर्वसुगमधर्मं पुरस्कृत्यास्माभिरिह कानिचित्प्रकरणानि विद्वद्भिरन्यत्र प्रपञ्चितानि तथैव परिकल्पितानीत्येव ।४८।

कुन्देति । सरसीरुहलोचने ! अयि कमलनयने ! अमुं पुरोवर्तिनम्, कुन्दानां माघ्यानाम्, 'माघ्यं कुन्दमि'त्यमरः, कुञ्जं लतागृहम्, 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः, पश्य विलोकय, इति काचिद् नर्मसखी नायिकायै श्रीकृष्णमभिसरन्त्यै मध्येमार्गं दृश्यमानं कुन्दकुसुमसौरभभावितं मदनकदनरङ्गायितं कुञ्जं सामन्त्रणं प्रदर्शयति । तदाकर्ण्य नायिका तत्र प्रियतमं कृष्णमनवलोकमाना उत्तरयति-सखि अये आलि ! अमुना पुरोवर्तिना; तथा न विद्यते 'मुः' मुकारो यस्य सः अमुः, तेन 'अमुना' कुन्दकुञ्जेन मे किं प्रियोजनम् । यदि मुकुन्दकुञ्जोऽभविष्यत् तदा तं नूनमद्रक्ष्यम्, अयन्तु मुकाररहितः कुन्दकुञ्जः, मया तु मुकुन्दस्य कुञ्जोऽपेक्ष्यते । शब्दार्थयोरभेदमध्यवस्येयमुक्तिः, एवमग्रेऽप्यवधेयं यत्र तत्र । सखीवाक्येऽपि अ'मुं' कुन्दकुञ्जमित्यत्रापीदं छलं न दुरूहम् । असन्निहितप्रियतमः कुन्दकुञ्जोऽयं उद्दीपनविभावत्वात् मम सन्तापमेवाऽऽपादयेदिति बहिर्जीवित भूतत्राऽपि त्वं कृष्णमभिसरन्तीं मामुपहससीति 'सखि' इति सोल्लुण्ठनामन्त्रणाकूतम् ॥ ४९ ॥

एकोना विंशतिः स्त्रीणां स्नानार्थं सरयूं गता ।
विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ॥ ५० ॥
समरे हेमरेखाङ्कं बाणं मुञ्चति राघवे ।

---

एकोनेति । स्त्रीणां महिलानाम्, एकोना एकसंख्याहीना–विंशतिः ऊनविंशतिः, 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः । संख्यार्थं द्विबहुत्वे स्तस्तासु चाऽऽनवतेः स्त्रियः' इत्यभिधानात् अत्र विंशतिशब्दस्य संख्यापरता बोध्या । अमरकोषश्लोकस्यास्य प्राचीनव्याख्यासु संख्यापरत्व-संख्येयपरत्वसंबन्धे भूयसी विवेचना वर्तते, परमिह प्रसक्तानुप्रसक्तपल्लवना-द्विरम्यत इति जिज्ञासुभिस्तत एवावसेयम् । स्नानार्थं आप्लवनार्थम्, 'अप्लाव आप्लवः । स्नानमि'त्यमरः । सरयूं तन्नामिकां तरङ्गिणीमयोध्याप्रान्ते प्रव-हन्तीम्, गता । विंशतिः, पूर्वोक्तानां स्त्रीणाम्, पुनस्त्वर्थे, आयाता प्रत्यागता, एको व्याघ्रेण भक्षितः, असम्बद्धं प्रतिभात्यापातत इदम् । गूढार्थस्तु प्रथम-चरणे 'एको ना' इति विच्छेदः । तथा च एकः पुरुषः, विंशतिश्च स्त्रियो गता आगताश्च, पुरुषो गतो व्याघ्रेण खादित इति ॥५० ॥

समर इति । समरे युद्धे, 'अस्त्रियां समरानीकरणाः' इत्यमरः । राघवे श्रीरामे, दिलीपेन परिचर्याप्रसादिता नन्दिनी 'वंशस्य कर्तारमनन्तकीर्तिं सुद-क्षिणायां तनयं ययाचे' इत्युक्तदिशाऽर्थिता पुत्रम् । अतस्तन्नाम्नैव वंशस्य 'रघु-वंश' इति प्रथा । हेम्नः सुवर्णस्य, रेखाया लेखाया अङ्कः चिह्नम्, यस्य, रेखा-रूपोऽङ्को वा यस्य तादृशं बाणं पृषत्कम्, मुञ्चति त्यजति, सति, 'यस्य च भावेन भावलक्षणमि'ति भावसप्तमी । सः प्रसिद्धप्रतिभटः, रावणोऽपि दशकन्ध-रोऽपि, मध्ये शरमध्यभागे, रीतिः पित्तलम्, 'रीतिः स्त्रियां स्यन्दप्रचारयोः । पित्तले लोहकिट्टे च' इति मेदिनी, धरतीति धरः पचाद्यच्, तस्या धरः, तम्, मध्यभागावच्छेदेन पित्तलमिति भावः । शरं बाणम्, मुमुचे मुक्तवान्, किञ्च मध्ये, शरस्येति शेषः । 'री' इत्यस्य वर्णस्य धरं बिभ्राणम्, शरं शकाराकार-

स रावणोऽपि मुमुचे मध्ये रीतिधरं शरम् ॥ ५१ ॥

यस्य षष्ठी चतुर्थी च विहस्य च विहाय च ।
अहं कथं द्वितीया स्याद् द्वितीया स्यामहं कथम् ॥ ५२ ॥

कुमारसंभवं दृष्ट्वा रघुवंशे मनोऽदधात् ।

---

रेफाकारात्मकं समुदायम्, ( शर ) शरीरं देहमिति भावः । मुमुचे, परित्यक्तवान् । रामबाणविद्धो रावणः प्राणान् जहौ । शरशब्दो रीतिशब्दश्च प्रथमयोजनायां बाण-पित्तलधातुरूपार्थपरः, द्वितीययोजनायां 'री-इति' विश्लेषितो रीशब्दः शरशब्दश्च तदानुपूर्वीपरावित्यवधेयम् । शब्दार्थयोरभेदाध्यवसायमूलेयमुक्तिः ॥५१॥

यस्येति । श्लोकार्थानुसन्धानायेदमवधेयम्—सहृदयेन केनचित्पित्राऽऽदिष्टाऽनूढा तनया स्ववरणार्थमागतं कञ्चिद् युवानं तद्योग्यताजिज्ञासयेमान् चतुरः शब्दान् 'किंविभक्त्यन्ता 'विहस्य विहाय अहं कथम्' इमे शब्दाः' इति जिज्ञासते । प्राकृतः स च तरुण आकारसाम्येन षष्ठ्यन्तं चतुर्थ्यन्तं शिष्टंद्वयञ्च द्वितीयान्तं मत्वा तथेति भणति । तदाकर्ण्य मन्दस्मितेनैव तमामन्त्र्य पितरमुपेत्य ब्रवीति । यस्य मनुष्यस्य मूढस्य ते चत्वारः शब्दास्तदुक्ततत्तद्विभक्तिमन्तः, तथाविधस्य कन्यार्थिनो मृत्पिण्डबुद्धेः, अहं, एतादृक्सुशिक्षितेत्यर्थान्तरसंक्रमितवाच्यम् । द्वितीया सहधर्मिणी, 'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी' इत्यमरः, कथं स्यां कथं भवेयम् ? ॥ ५१ ॥

कुमारेति । रघुवंशे रघुकुले, कुले देशे मनुष्यसमुदाये वा, 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबम्' इति मेदिनी, श्रेष्ठः उत्कृष्टः, भगवतो रामस्य कल्याणगुणगणाकरत्वात् पुरुषोत्तमत्वाच्च । राजीवमिव कमलमिव, 'बिसप्रसूनराजीवमि' त्यमरः, लोचने नयने यस्य सः, रामः दाशरथिः, राक्षसानां निशाचराणाम्, कुं पृथ्वीं मारयतीति कुमारः, भुवन-

राक्षसानां कुलश्रेष्ठो रामो राजीवलोचनः ॥ ५३ ॥
विषं भुङ्क्ष्व महाराज स्वजनैः परिवारितः ।
विना केन विना नाभ्यां कृष्णाजिनमकण्टकम् ॥ ५४ ॥
शस्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः ।

---

पीडक इति यावत् । तथाभूतं सम्भवं उत्पत्तिम्, दृष्ट्वा आलक्ष्य, मनः चित्तम्, अदधात् निहितवान्, राक्षसध्वंस इति शेषः । राक्षसानां उपद्रवं विलोक्य त इमे ध्वंसनीया इति मनस्यचिन्तयदिति भावः ॥ ५३ ॥

विषमिति । भो महाराज ! स्वजनैः बन्धुभिः, 'बन्धुस्वस्वजनाः समाः' इत्यमरः । परिवारितः परिगतः, युक्त इति यावत् । न विद्यते कण्टकः क्षुद्ररिपुः, यस्मिंस्तत् यस्मिन् कर्मणीति भुजिक्रियाविशेषणं वा, 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इति नानार्थेऽमरः। विगतः षः षकारो यस्मात्तत् विषम्, केन ककारेण, विना रहितमित्यर्थः, नाभ्यां नकारद्वयेन विना, 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति तृतीयोभयत्र, ईदृशं 'कृष्णाजिनं' भुङ्क्ष्व अनुभव, 'कृष्णाजिनं' इत्यस्मात् षकार-ककार-नकारद्वयनिस्सारणे 'ऋ आ जि अम्' इतीयदवशिष्यते, एषां वर्णानां यणसन्धिद्वये 'राज्यम्' इति निष्पद्यते । न चात्र 'नाभ्यां' इत्यत्र मूर्धन्यदन्त्ययोः सारूप्याभावादेकशेषः कथमिति शङ्क्यम्; मूर्धन्यतायाः षत्वप्रयुक्तत्वात् । राजन् परिवारसमेतोऽसपत्नं राज्यभोगमनुभवेत्याशीः कस्यचन कवेः । यद्यप्यत्र 'भुजोऽनवने' इत्यनेनानवनेऽप्यवहारार्थ एव भुजेरात्मनेपदमनुशिष्यत इति प्रकृते राज्यस्याभ्यवहारायोगादवनमेव विवक्षितमिति 'भुङ्क्ष्व' इत्यात्मनेपदप्रयोगश्चिन्त्यः, तथाऽपि 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' 'दुःखशतानि भुङ्क्ते' इत्याद्यभियुक्तप्रयोगबलात् सूत्रे 'अनवने' इति पर्युदासस्वारस्याच्च उपभोगात्मसात्करणयोरप्यात्मनेपदं भवतीति तत्त्वबोधिन्यामुपपादितम् ॥ ५४ ॥

शस्त्रमिति । शस्त्रं आयुधम्, 'शस्त्रमायुधलोहयो'रित्यमरः, न खलु, उभयमपि निषेधार्थकमव्ययम्, निषेधदार्ढ्याय निषेधकद्वयम् । 'निषेधवाक्या-

तदेव शस्त्रं कृतवान् पितुराज्ञा न लङ्घिता ॥ ५५ ॥
देवराजो मया दृष्टो वारिवारणमस्तके ।
भक्षयित्वाऽर्कपर्णानि विषं पीत्वा क्षयं गतः ॥ ५६ ॥
रामरामेऽति रामेति रमे रामे मनोरमे ।

---

लङ्कारे जिज्ञासानुनये खलु' इति नानार्थेऽमरः । कर्तव्यं निर्मातव्यम्, इति पित्रा तातेन, नियोजितः आदिष्टः, पुत्र इत्याध्याहर्तव्यम्, तदेव निषिद्धमेव, अथवाऽऽदिष्टमेव शस्त्रं कृतवान् निर्मितवान्, तथाऽपि पितुः आज्ञा 'न खलु कर्तव्यमि'त्यकारिका, न लङ्घिता नातिक्रान्ता । नखं लुनातीति न खलु नखरकृन्तकं, शस्त्रं कर्तव्यमित्यादेशः खलु । तदेव कृतमपि । तथा चाऽऽज्ञापरिपालनमेवेति भावः । सभङ्गश्लेषः ॥ ५५ ॥

देवरेति । वारिवारणस्य सेतोः, 'पुल्' इति भाषाप्रसिद्धस्य मस्तके उपरिभागे, मया, देवराजः इन्द्रः, दृष्टः अवलोकितः । सः, अर्कपर्णानि तदाख्यपत्राणि, 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' इति मेदिनी । भक्षयित्वा खादित्वा, विषं गरलम्, पीत्वा क्षयं नाशम्, गतः प्राप्तः । इत्यापाततः । गूढस्तु-देवर ! अयि भर्तृसोदर ! 'श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ' इत्यमरः । वारिवारणमस्तके मया दृष्टः, अजः बस्तः, अर्कपर्णानि भक्षयित्वा, विषं जलम्, 'गरले विषमम्भसि च' इत्यमरव्याख्यासुधायां भानुजीदीक्षितः, 'विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः' इति जयदेवोऽपि । 'विष्लृ व्याप्तौ' 'इगुपधे'त्यादिना कः । पीत्वा क्षयं गृहम्, क्षीयन्ते प्राणिनोऽत्रेति, 'क्षि-क्षये' 'एरच्' 'पुंसि' घो वा, 'क्षयो गेहे च कल्पान्तेऽपचये रुजि' इति हैमः, स्ववासस्थानमिति यावत् । गत इति सम्बन्धः ॥५६॥

रामेति । हे वरानने सुन्दरमुखि ! पार्वति ! शङ्करस्येयमुक्तिः। रामरामेतिरामेति, रटन् इति शेषः । सातत्यद्योतनाय त्रिरुक्तिः, मनोरमे चित्ताह्लादके,

सहस्रनामतत्तुल्यं राम नाम वरानने ॥ ५७ ॥

यामि विधावभ्युदिते पुनरेष्यामीति यदुदितं भवता ।

---

रामे रमन्ते योगिनोऽस्मिन्निति 'हलश्चे'ति घञ् , रामः रामाख्यं परं ब्रह्म, तत्र, रमे विहरामि, अहमिति शेषः, रमु—क्रीडायामित्यस्य लटो रूपम् । रामनामाविरतं जपन्नहं रामेऽमन्दानन्दसिन्धौ निमज्जामि इति भावः । यतः, रामनाम 'राम' इत्येकं नाम, सहस्रनामतत्तुल्यं महाभारतोक्तविष्णुसहस्रनाम-सदृशम् , तत्तुल्यशब्दोऽपि तत्सदृशसतत्त्वादिशब्दवत् तुल्यार्थपरः । तच्छब्दस्तु-ल्यसदृशतत्त्वादिशब्दसमभिव्याहृतस्तुल्यत्वाद्यर्थमेवाभिधत्ते । अथवा 'सहस्रनाम तुल्यं तद्रामनाम वरानने' इति पठनीयम् ? तच्च तत् तुल्यञ्चेति पूर्वं समास्य तदनु सहस्रनामभिस्तत्तुल्यमिति वा समासनीयम् । तत्र तच्छब्दस्य प्रसिद्धत्व-मर्थः । अन्या योजना—रामः राः धनं यस्य सः, अहमित्यर्थाल्लभ्यते, 'अस्म-द्युत्तमः' इत्यस्य विवरणस्थ—'तथाभूते' इति पदस्य 'तिङ्वाच्यकारकवाचिनि प्रयुज्यमानेऽप्रयुज्यमाने चे'ति व्याख्यानात् । वरानने रुचिरवदने, रामवि-शेषणम् । अतिक्रान्ता परिहृता रामा रमणी सीता माया वा, येन तथाभूते, मनोरमे रामे, अतिरमे अत्यन्तं क्रीडामि, संलग्नो भवामीति यावत् । यतः मे मम, रामनाम, 'राम' इतिनाम रामस्य वा अन्यन्नाम, सहस्रनामतत्तुल्यं इतरेषां देवानां गणेशशिवशक्त्यादीनां सहस्रसङ्ख्यापरिमितनामभिः सदृशम् । रामस्यैकं नाम अन्यदेवानां सहस्रनामसमकक्षमिति भावः। 'येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमि'ति भग-वदुक्तेः, 'सर्वदेवनमस्कारः केशवं प्रतिगच्छती'त्यभिहितत्वाच्च अन्यदेवतो-पासनाऽपि भगवदुपासनायामेव जिह्मगत्या पर्यवस्यति न तु साक्षादित्येव॥५७॥

यामीति । नायकं प्रति नर्मसुहृदुक्तिः—मुग्धाया विरहमसहमानायाः पुरस्तात् प्रवासजिगमिषया भवता यदभिहितं—यामि गच्छामि, इदानीमिति भावः । विधौ दैवे, 'विधिर्विधाने दैवेऽपि' इत्यमरः, चन्द्रे वा, उभयत्रापि 'अच्च घेः' इत्यनेन ङेरौत्त्वं घेरत्वञ्च, अभ्युदिते अनुकूले प्रसादोन्मुखे,

जानात्युदन्तमेतं नेदं तत्त्वेन मुग्धवधूः ॥ ५८ ॥

अयि सखि शस्तः सखिवत्पतिरिति किं त्वं न जानासि ।

---

आविर्भूते च, पुनः एष्यामि प्रत्यागमिष्यामि, इण्-गतावित्यस्माल्लृटीदं रूपम् । इति भवता यद् उदितं उक्तम्; मुग्धवधूः छलानभिज्ञा ऋजुहृदया, एतं उदन्तं वृत्तान्तम्, 'वार्ताप्रवृत्तिर्वृत्तान्त उदन्तः स्याद्' इत्यमरः, अथवा एतं 'विधौ' इति शब्दम्, उदन्तं ह्रस्वोकारान्तं विधुशब्दम्, जानाति, इदं 'विधौ' इति पदम्, तत्त्वेन याथार्थ्येन अथवा इदन्तत्वेन ह्रस्वेकारान्तत्वेन 'विधिशब्दत्वेन' न जानाति, मौग्ध्यात् चन्द्रोदयावसरे प्रत्यागमिष्यसीति विस्रम्भात् कथं कथमपि मन्दव्यथा समपद्यत । कदाचिद् दैवेऽनुकूले दूरं गतोऽहं प्रत्यावर्तिष्ये इति ते गूढाशयं यदि जानीयात्तदा न जाने किमत्याहितमनुतिष्ठेदिति भावः ॥ ५८ ॥

अयीति । नायिकानर्मसख्योर्विस्रम्भालापः । उपपतेः प्रशंसां नर्मसखीकृतामाकर्ण्य नायिका छलेन पृच्छति । अयि सखि ! पतिः भर्ता, सखिवत् सुहृदिव शस्तः श्लाघितः, इति त्वं किं न जानासि ? प्रश्नः । सुहृद् यथा प्रियः 'केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्' इत्यादिभिः प्रशंसाश्रवणात् पतिरपि तथैव 'पतिरेव परः स्त्रीणाम्' इत्यादिना स्तुतः किल । तथाऽपि त्वं कथं तद्विरुद्धं भणसि इति नायिका पृच्छति । नर्मसख्यपि पृच्छाच्छलेनैव स्वमतं द्रढयति । आलि ! अये सखि ! 'कृदिकारादक्तिनः' इति विहितङीषन्तस्येदं सम्बोधनं बोध्यम् । उपपतिः जारः, 'जारस्तूपपतिः समौ' इत्यमरः, अतिसखिवत् अत्यन्तं मित्रवत्, शस्तः श्लाघितः, अस्तीति शेषः, इति, इत्यन्तं कर्म, त्वयाऽपि पतिप्रशंसापण्डितयाऽपि, कथं नाबोधि कुतो नाज्ञायि ? 'सुभगं वदति जनस्तं निजपतिरिति नैष रोचते मह्यम्' इत्यादिषु निजपतेः सुन्दरस्यापि ( स्वैरिणीनां ) अरुचिकरत्वाख्यानात् त्वमुपपतिं प्रेष्ठं कथं न मन्यसे इति प्रतिप्रश्नः । गूढार्थस्तु—पतिः पतिशब्दः, शस्तः द्वितीयाबहुवचन-

शस्तोऽतिसखिवदुपपतिरित्यालि कथं त्वयाऽपि नाबोधि॥५९॥
द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।

---

प्रत्ययमारभ्य, पञ्चम्यांस्तसिल् । सखिवत् सखिशब्दवत्, सखिशब्दस्य पतिशब्दस्य च ( असमासे ) घिसंज्ञाभावात् 'ना'–भावादयो घिप्रयुक्ता न भवन्तीति द्वितीयाबहुवचनमारभ्य सुप्पर्यन्तं 'सखीन् सख्या पतीन् पत्या, इति क्रमेण एकविधानि रूपाण्येव भवन्तीति, त्वं न जानासि किमिति प्रश्नः । सख्यपिप्रति पृच्छति, उपपतिः उपपतिशब्दः, शस्तः शस्प्रत्ययमारभ्य, अतिसखिवत् अतिसखिशब्दवत्, 'शेषो घ्यसखि' इति प्रतिषिद्धः सखिशब्दः, नत्वतिसखिशब्दः, समुदायस्य सखिरूपत्वाभावात् 'असखि' इति निषेधानवसराद् घिसंज्ञा भवति शस्तः प्रभृत्येव, तत्पूर्वन्तु 'अनङ्णिद्वद्भावयोराङ्गत्वात् पदाङ्गाधिकारे तस्य च तदन्तस्य चेत्युक्तत्वात्तौ तु भवतः, एवं 'पतिः समास एव' इत्यनेनोपपतिशब्दस्य घिसंज्ञकत्वाद् 'ना'-भावादयो भवन्तीति 'उपपत्यतिसखि'शब्दौ सरूपौ भवत इति कथं त्वयाऽपि नाबोधि, इति सख्याः पर्यनुयोगः प्रथमद्वितीययोजने अर्थशब्दपरे ॥ ५९ ॥

द्वन्द्व इति । राज्ञः समक्षं विज्ञस्य कस्यचित् स्वदारिद्र्याख्यानपूर्वकतदुपशमनोपायः षण्णां समासानां व्यपदेशघटितपद्यरचनाकौशलेन निवेद्यते—भङ्गमुक्तिकलशस्येदं पद्यमिति क्षेमेन्द्रः कविकण्ठाभरणे । अहं द्वन्द्वः युग्मकः, पत्न्यपि वर्तते मम, 'अहं द्वन्द्वः' इतीदं उद्देशविधेयतापन्नम् । द्वौ गावौ यस्यैवम्भूतः, 'पुमान् स्त्रिये'त्येकशेषो बोध्यः । मम, गेहे गृहे, भावः पदार्थमात्रम्, अव्ययी व्ययाभाववान् दारिद्र्यात् वस्त्वेव नास्ति, कथं तस्य व्ययः स्यात् ? अव्ययीभावः, इति समस्तं व्यन्तम् । अनव्ययः अव्ययः सम्पद्यमानः कृतः इति तथाभूतः, अर्थसाम्यम् । तस्मात्, हे पुरुष ! तत् तादृशं कर्म धारय कुरु, येन तादृक्कर्मधारणेन अहं बहुः व्रीहिः धान्यं यस्येदृशः, स्यां भवेयम्, कुटुम्ब्यस्मि, धेनुः अनड्वांश्च वर्तेते, निस्स्वत्वात् किमपि वस्त्वेव गृहे नास्ति, अतो

तत्पुरुष तत्कर्म धारय येनाहं स्यां बहुव्रीहिः ॥ ६० ॥
पतिरतीव सुभगो युवा परविलासवतीषु पराङ्मुखः ।
शिशुरलंकुरुते भवनं सदा तदपि सा सुदती रुदती कुतः॥६१॥
भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना स

---

भूम्याढकं . देहीत्याशयः । द्वन्द्वद्विग्वव्ययीभावतत्पुरुषकर्मधारयबहुव्रीहयः समासाः ॥ ६० ॥

पतिरिति । पति प्रियः, अतीव अतिशयेन, 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ।' इत्यमरः । धनी आढ्यः, 'इभ्य आढ्यो धनी' इत्यमरः । सुभगः सुन्दरः, युवा तरुणः, 'वयस्थस्तरुणो युवा' इत्यमरः । परविलासवतीषु अन्यसुन्दरीषु, विषये, पराङ्मुखः अनासक्तः, विमुख इति यावत् । शिशुः अर्भकः, भवनं गृहम्, अलङ्कुरुते भूषयति, 'धूलिधूसरसर्वाङ्गो विकसद्दन्तकेसरः । आस्ते कस्यापि धन्यस्य द्वारि दन्ती गृहेऽर्भकः ॥' इत्युक्तत्वात्पुत्रो हि गृहभूषणम् । तदपि तथाऽपि, सा सुदती सुन्दरी, कुतः किमर्थम्, सदा सर्वदा, रुदती क्रन्दन्ती, तिष्ठतीति शेषः । प्रचुरधनवान् पतिः सुन्दरः तरुणः परवनिताविमुखः, अनपत्यतादुःखमपि नास्ति साऽपि सुन्दरी, इति दुःखकारणाभावे सुखसामग्रीसमवधानेऽपि कुतो रोदिति इति चेत् ? पतिः सु शोभने, मे नक्षत्रे, 'नक्षत्रमृक्षं भं तारा तारके'त्यमरः, गच्छति इति 'सुभगः' धर्मशास्त्रभीतो निषिद्धतिथिनक्षत्रादीनि वर्जयित्वा विहितनक्षत्रादियुक्ते क्वचित् शुभदिन एव 'ऋतुकालाभिगामी स्यादि' त्यादिशास्त्रानुसारेण रन्तुं प्रवर्तते; प्रदीप्तकामायास्तस्यास्तेनालन्ता न भवतीति निश्शब्दं रोदितीति भावः ॥६१॥

भवित्रीति । रावणकर्तृकसीताभर्त्सना चरणत्रये, तुरीये चरणे च सीताया उत्तरञ्च । हे रम्भोरु ! सुन्दरि ! अधुना इदानीम्, त्रिदशानां देवानाम्, मद्विरोधिनां रामावलम्बानामिति यावत्, वदनस्य मुखस्य, ग्लानिः म्लानता, भवित्री भाविनी, तृजन्तम्, । रामपराजयन

रामो मे स्थाता न युधि पुरतो लक्ष्मणसखः ।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमूः
लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥ ६२ ॥
राजन् कमलपत्राक्ष तत्ते भवतु चाक्षयम् ।

---

स्वमनोरथभङ्गात्सुराः परिम्लानवदनाः सद्य एव भवन्तीति विस्रम्भात्सिद्धवत्कृत्य प्रलपति रावणः । लक्ष्मणस्य सौमित्रेः, सखा सुहृत्, 'राजाहः सखिभ्यष्टच्' इत्यनेन टच्, स रामः, वनेचरत्वमनुष्यत्ववानरसहाययुक्तत्वेन प्रसिद्ध इति सोल्लुण्ठनोक्तिः । युधि युद्धे, 'समित्याजिसमियुधः' इत्यमरः, मे पुरतः समक्षम्, स्थाता न न स्थास्यति, पलायेत पराजीयेत वेति भावः, ष्ठाधातोर्लुट् । इयं किलिकिलिकोलाहलानुमीयमाना दृश्यमाना वा, वानरचमूः प्लवगसेना, 'ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः।' इत्यमरः । अधुना सम्प्रत्येव, उच्चैः घोराम्, विभक्तिप्रतिरूपकमव्ययम्, विपदं विपत्तिम्, नाशमिति यावत् । यास्यति प्राप्स्यति, इत्येतावदाकर्ण्य जानकी निर्भीकमुत्तरयति—हे लघिष्ठ ! लघुतम ! 'अतिशायनेतमबिष्ठनौ' इत्यनेनेष्ठन् प्रत्ययः, इदं पद्यचरणत्रयं षष्ठाक्षरात् परं सप्तमम्, तस्य विलोपात् विलोपं विधायेति 'ल्यब्लोपे पञ्चमी,' पुनः पठ पुनरुच्चारय, तदानीं तवोत्तरं भवतीति भावः । तथा च चरणत्रयं सप्तमाक्षरं निरसार्य पठ्यते चेदीदृग्वाक्यत्रयं सम्पत्स्यते 'रम्भोरु दशवदनग्लानिर्भवित्री, स लक्ष्मणसखो रामो मे पुरतः स्थाता, इयं वानरसेना उच्चैः पदं यास्यति', इति । शिखरिणीछन्दः, 'रसै रुद्रैश्छिन्ना यमनसलागः शिखरिणी'ति तल्लक्षणम् ॥ ६२ ॥

राजन्निति । कमलपत्रे इवाक्षिणी यस्य तत्सम्बुद्धौ कमलपत्राक्ष पद्मदलायतलोचन ! हे राजन् नृप ! करेणुः हस्ती, 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः, 'करेणुः' इत्यानुपूर्वी, करणैः ( इन्द्रियैः ) ककाररेफणकाररूपैर्व्यञ्जनैः, विना राहित्येन, यद्रूपं यादृशं रूपम्, आसादयति प्राप्नोति, तत् रूपम्, 'करेणुः' इत्यस्माद्

असादयति यद्रूपं करेणुः करणैर्विना ॥ ६३ ॥
मञ्जुलघौ सम्भावितगुणे क्वचिन्नापदाधारे ।
अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ ॥ ६४ ॥

---

व्यञ्जननिष्कासने 'अ ए उः' इत्यवशिष्यते, तत्र वृद्धौ ( ऐ ) आयादेशे च 'आयुः' इति जातम्, ते तव, चः पादपूरणे । न विद्यते क्षयो यस्य तत्तादृशं नाशरहितम्, भवतु अस्तु, आशिषि लोट् । 'आयुर्जीवितकालो ना' इत्यमरः । चिरं जीया इत्याशीः ॥ ६३ ॥

मञ्जुलघाविति । अयि सखि ! नायिकाकर्तृकनर्मसखीकर्मकं सम्बोधनम् । मञ्जुः सुन्दरः,' मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः, स चासौ लघुः इष्टः, 'त्रिष्विष्टेऽल्पे लघुः' इति नानार्थेऽमरः, क्षिप्रकारी वा, विशेषणयोरपि वैवक्षिकविशेष्यविशेषणभावमाकल्य्य समासः खञ्जकुब्जादिवत् । सम्भाविताः आदृताः, लोक इति यावत्, तर्किता वा, गुणाः रूपौदार्यशौर्यादयः, यस्य तादृशे, क्वचित् कदाचिदपि, न, आपदो विपदः, आधारे आस्पदे, नशब्देन निरनुबन्धकेन 'सुप्सुपे'ति समासः । तत्र तादृशे, उपपतौ जारे, मम, चेतः मनः, 'चित्तन्तु चेतो हृदयम्' इत्यमरः । अस्तीति शेषः, अस्तिर्भवन्तीत्यप्रयुज्यमानोऽपि प्रयुज्यत इत्युक्तत्वात् । तुर्वैलक्षण्ये । अनीदृशे पूर्वोक्तसौन्दर्येष्टत्वादिगुणविधुरे, पत्यौ भर्तरि, न, चित्तं न लगतीति भावः । गूढार्थस्तु—मम चेतः, उपपतौ उपपतिशब्दे, वर्तत इति शेषः, कथम्भूते—मञ्जुला मनोज्ञा, अतिसङ्क्षिप्तत्वात्, 'घि'संज्ञा 'पतिः समास एवे'ति विहिता, यस्मिन्, पुनः कीदृशे- सम्भावितः सम्पादितः, 'घेर्ङिति' इति गुणः 'अदेङ्'न्यतमरूपः, यस्य तथाभूते, क्वचित् तृतीयैकवचने, नापदस्य 'आङो नाऽस्त्रियामि'ति विहितस्य 'ना'-पदस्य, आधारे आस्पदे, विषय इति यावत्, अत्र पदं शक्तत्वरूपं बोध्यम् । ईदृशे उपपतिशब्दे, मे मनः, न तु, अनीदृशे घिसंज्ञा-गुण-ना-भावाभाववति, पत्यौ पतिशब्दे । पतिशब्दस्यासमासे घिसंज्ञाभावात्तत्प्रयुक्तविशेषकार्याभावात्पतिशब्दसाधने सारल्यात् उपपतिशब्दसाधन एव विशिष्य मनोयोगं विदधामीति भावः ॥ ६४ ॥

स जयति चित्रचरित्रो यस्य हि वरचरणपुष्करकरेणुः।
महिषीमृषिसिंहस्य प्राजीजनदपि वृषोदये हेतुः॥ ६५॥
काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं सा

---

स इति। चित्राणि आश्चर्यकराणि चरित्राणि कृत्यानि प्रस्तरतारण-महिलीकरणादीनि यस्यैवम्भूतः। सः प्रसिद्धो रामः, जयति सर्वोत्कर्षेण वर्तते। वृषस्य वृषभस्य, उदये उत्पत्तौ, हेतुरपि कारणभूतोऽपि, अपिना विरोधो द्योत्यते। यस्य रामस्य, वराणि श्रेष्ठानि, 'दैवाद् वृते वरः श्रेष्ठ' इत्यमरः, चरणाः पादाः, पुष्करं शुण्डाग्रम्, 'पुष्करं पङ्कजे व्योम्नि पयः-करिकराग्रयोः,' इति विश्वः, यस्यैवम्भूतः, करेणुः हस्ती, 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। ऋषिसिंहस्य ऋषिनामककेसरिणः, महिषीं सैरिभीम्, प्राजी-जनत् उदपादयत्, अहो वृषभोत्पादनकारणभूतः, स च गजः, सोऽपि सिंहस्य महिषीं उत्पादयामासेति नूनं चित्रमस्य चरित्रम्। विरोधाभासपरिहारस्तु—वृषस्य धर्मस्य, 'सुकृते वृषभे वृषः' नानार्थेऽमरः, उदये वृद्धौ, हेतुः, 'बीजं धर्मद्रुमस्ये'त्युक्तत्वात्। यस्य रामस्य, पुष्करमेव पुष्करकं कमलम्, स्वार्थे कः। चरण एव पुष्करकं तथाभूतम्, वरञ्च तत् चरणपुष्करकञ्च, तस्य रेणुः धूलिः, 'रेणुर्द्वयोः स्त्रियां धूलिरि'त्यमरः। ऋषिसिंहस्य मुनिश्रेष्ठस्य गौतमस्य, 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः। महिषीं पत्नीम्, यद्यपि महिषीशब्दोऽमरहेमचन्द्राद्यनुसारेण नृपपत्न्या एवाभिधायकः, तथाऽपि मह–पूजायामित्यस्मात् 'अविमहिष्योष्टिषच्' इत्युणादिप्रत्ययेन व्युत्पाद्यमानोऽयं शब्दः पूज्यवाचको यौगिको गृह्यते, अहल्यायास्तु पूज्यत्वं 'अहल्या द्रौपदी' त्यादिपञ्चपतिव्रतासु परिगणनादवारितमेवेति मन्तव्यम्। प्राजीजनत् उत्पादितवान्। पतिशापात्प्रस्तरतामापन्नाऽहल्या भगवद्रामभद्रचर-णसारसरेणुना तारितेति रामायणकथाऽत्रानुसन्धेया॥ ६५॥

काचिदिति। काचिद्, बाला मुग्धा, रमणस्य प्रियस्य, वसतिं स्थानम्, 'वसती रात्रिवेश्मनोः' इत्यमरः। प्रति, करण्डं पुष्पपेटकम्, 'करण्डो मधुको-

तन्मूले सभयमलिखद् व्यालमस्योपरिष्टात्।
गौरीनाथं पवनतनयं चम्पकं चास्य भावं
पृच्छत्यार्यान्प्रति कथमिदं मल्लिनाथः कवीन्द्रः ॥६६॥
पानीयं पातुमिच्छामि त्वत्तः कमललोचने।

---

षासिकाररण्डवद्लाढके' इति मेदिनी। प्रेषयन्ती उपहरन्ती, सती, सा तन्मूले करण्डस्याधः, सभयं सातङ्कम्, क्रियाविशेषणम्, व्यालं सर्पम्, अलिखत् लिखितवती, अस्य करण्डस्य, उपरिष्टात् उपरिभागे, गौरीनाथं हरम्, पवनतनयं हनुमन्तम्, चम्पकं हेमपुष्पकम्, 'चाम्पेयश्चम्पको हेमपुष्पकः' इत्यमरः, च अलिखत् लिलेख, कवीन्द्रः बुधश्रेष्ठः, मल्लिनाथः तन्नामा पण्डित एतत्पद्यरचयिता, आर्यान् कुलीनान् आचार्यान्, 'महाकुलकुलीनार्यसभ्यसज्जनसाधवः', इत्यमरः, 'कर्तव्यमाचरन् काममकर्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स तु आर्य इति स्मृतः॥' इति वसिष्ठः। अर्यन्ते अर्तुं योग्या वा 'ऋ-गतौ' वित्यस्माद् 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः। कोविदानिति भावः, अस्य लिखनस्य, भावं आशयम्, पृच्छति अनुयुङ्क्ते, पृच्छिर्द्विकर्मकः। कथमिदम्? इदमाकूतं मुग्धाया यत् पुष्पकरण्डसौरभहरणाय गन्धवह आयास्यति चेत् पवनाशनस्तं (सर्पः) निगिलिष्यति, पुष्पधन्वाऽस्त्रार्थं जिहीर्षति चेत् स्मरहरस्तं हनिष्यति, ग्लपनाय तपनो यतते चेत् अञ्जनासूनुस्तं ग्रहीष्यति, जन्मसमय एव हनूमता फलबुद्ध्या भास्करोऽनुद्रुत इति पौराणिकं वृत्तम्, मकरन्दास्वादनाय भ्रमरश्चेदागमिष्यति चम्पकं तं निहनिष्यति। चम्पकं भ्रमरघातकमिति प्रसिद्धिः। एतानि स्वस्वशत्रुचित्राणि समालक्ष्य ते ते बिभ्युरिति मुग्धाया मुग्धाशयः। मन्दाक्रान्तावृत्तम्, 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ गुरू चेत्' इति तल्लक्षणम्॥ ६६॥

पानीयमिति। अयि कमललोचने पद्मनयने! त्वत्तः त्वत्सकाशात्, पानीयं जलम्, पातुम्, इच्छामि अभिलषामि, अतः, यदि दास्यसि वित-

यदि दास्यसि न पास्यामि नो दास्यसि पिबाम्यहम् ॥ ६७॥

अच्युतभक्तिवशादिह समभावस्तत्प्रसङ्गेन ।
सारमतेरभ्युदयति रतिरिति नैवाद्भुतं किञ्चित् ॥ ६८ ॥

---

रिष्यसि, तदा, न इच्छामि न अभिलषामि, पानीयं माऽस्त्विति यावत्, नो दास्यसि, तदा पिबामि, इत्यसम्बद्धत्वमिव । परं दासी शूद्रस्त्री असि चेद् माऽस्तु, नो दासी असि चेत्, पिबामि इत्याकूतम् ॥ ६७ ॥

अच्युतेति । इह संसारे, अच्युतभक्तिवशात् कृष्णानुरागपारतन्त्र्यात्, समभावः शत्रुमित्रादिद्वन्द्वेषु समानदृष्टिः, तस्याः भक्तेः, प्रसङ्गेन सम्पर्केण, सारे श्रेष्ठे मतिर्यस्य तथाभूतस्य, 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इति नानार्थेऽमरः, एकवचनेन तस्य वैरल्यं द्योतितम्, रतिः प्रीतिः सन्तोषः, भगवद्भक्तस्य विषयवासनायाः समूलोन्मूलनात् स्वस्वरूपानन्दानुभव इति भावः । अभ्युदयति, अभितः समन्ततः, उदयति उत्पद्यते । इति इदं वृत्तम्, अद्भुतं आश्चर्ययुक्तम्, 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्यनुशासनाद् धर्मिपरत्वं बोध्यम्! नैव किञ्चित् किमपि नास्ति, श्रुत्यादिप्रमाणसिद्धित्वादिति भावः । अपरा योजना--अच्युता अस्खलिता, भा स्फूर्तिः प्रकाशः, व्याकरणसम्बन्धिनीति यावत्, यस्य तत्सम्बद्धौ व्याकरणप्रतिभाशलिन्, तथोक्त! 'क्तेः' क्तिनः, 'स्त्रियां क्तिन्' इति विहितस्य प्रत्ययस्य, निरन्त्यानुबन्धोऽत्र गृहीतः, वशात् अनुरोधात्, सः प्रसिद्धः, मः मकारस्य, अभावः लोपः, भवतीति शेषः । 'स मभाव' इत्यत्र 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इत्यनेन सुलोपो बोध्यः, 'म्' इत्यस्य 'अभाव' इत्यनेन षष्ठीतत्पुरुषः । तस्य पूर्वोक्तप्रत्ययस्य प्रसङ्गेन, रमतेः रमुधातोः, सा, 'रतिः' रतिशब्दः, अभ्युदयति निष्पद्यते, इत्यद्भुतं नैव किञ्चित् । रमुक्रीडायामित्यस्माद्धातोर्भावे क्तिनि 'अनुदात्तोपदेशे' त्यादिना मलोपे 'रतिरि' ति रूपं सिद्ध्यति ॥ ६८ ॥

कति ते कबरीभारः सुमनःसङ्गात्प्रियेऽति नीलत्वात् ।
भवति च कलापवत्त्वात् निर्जरसेव्यः कथं न स्यात् ? ॥६९॥
लम्बोदर तव चरणावादरतो यो न पूजयति ।

---

कतीति । प्रिये कान्ते, ते तव, कबरीभारः केशबन्धरचना, सुमनसां पुष्पाणां सुराणाञ्च, सङ्गात् संयोगात् उपास्योपासकभावरूपसम्बन्धाच्च, 'स्त्रियः सुमनसः पुष्पम्' 'सुपर्वाणः सुमनसः' इत्युभयत्रामरः, क इव ब्रह्मेव आचरति इति कति, नामधातोर्लट् एकवचनम्, 'कः प्रजापतिरुद्दिष्टः' इत्यभिधानम् । नीलत्वात् असितवर्णत्वात्, उभयत्रापि; अ इव विष्णुरिव आचरतीति 'अति'। विष्णुरपि श्यामवर्णः, केशवेशोऽपि 'अकारो वासुदेवः स्यादि'त्येकाक्षरी । कलापवत्त्वात् भूषणवत्त्वात्समूहवत्वाद्वा चन्द्रवत्वाच्च, 'कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः । चन्द्रे विदग्धे व्याकरणभेदेऽपि' इति मेदिनी । भव इवाऽऽचरति इति भवति च शङ्करवद् वर्तते । अतः निष्क्रान्ता जराया निर्जराः 'निरादयः क्रान्ताद्यर्थे' इति समासः, 'गोस्त्रियोरि'ति ह्रस्वता, निर्गता जरा येभ्यस्त इति बहुव्रीहिर्वा, निर्जरैः युवकैः सुरैश्च, सेवितुं उपासितुं योग्यः, कथम्, न स्यात् न भवेत् ? ब्रह्मविष्णुशिववदाचरन् केशवेशस्ते देवैरप्युपास्य इति भावः । सुमनः-कलाप-निर्जर-पदानि श्लिष्टानि श्लेषोपमयोरङ्गाङ्गिभावेन संकर इति दिक् । 'जराया जरसन्यतरस्याम्' त्यनेन जरसादेशस्य वैकल्पिकत्वात्प्रकृते नाऽऽदेशः । तरुणपक्षे निर्जरशब्दो यौगिकः, सुरपक्षे तु योगरूढः ॥ ६९ ॥

लम्बोदरेति । लम्बं दीर्घम्, उदरं यस्येति तत्सम्बुद्धिः, लम्बोदर गजानन ! एवमेवामरः । यः तव चरणौ पादौ, आदरतः आदरेण, सार्वविभक्तिकस्तसिः, न, पूजयति अर्चति, सः तादृशः, विश्वामित्रः तन्नामा प्रसिद्धर्षिः, एवं विश्वस्य जगतः, अमित्रः शत्रुः, 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः । दुर्वासाः प्रसिद्धक्रोधो मुनिः, किञ्च दुर्गतं मलिनं वासः वस्त्रम्, यस्य तादृशः, 'वस्त्रमाच्छादनं वासः' इत्यमरः । गोतमः न्याय-

स भवति विश्वामित्रो दुर्वासा गोतमश्चेति ॥ ७० ॥
विराजराजपुत्रारेर्यन्नाम चतुरक्षरम् ।
पूर्वार्धं तव शत्रूणां परार्धं तव सङ्गरे ॥ ७१ ॥

---

शास्त्रप्रवर्तकः पुराणप्रथितोऽहल्यापतिर्वा, अत्यन्तं गौः गोतमः प्रशुप्रायः, 'अतिशायने तमबिष्ठनौ' इत्यनेन तमबन्तोऽयं शब्दः, चः समुच्चायकः, इतिः प्रकाशापरपर्यायस्पष्टार्थकः । 'इति हेतुप्रकरणप्रकाशादिसमाप्तिष्वि'त्यमरः । भवति सम्पद्यते । हे गणेश त्वत्पूजाविमुखः सर्वाप्रियो दरिद्रो जडश्च भवतीति भावः । 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते; अपितु विधेयं प्रशंसितुमि'ति न्यायेन त्वत्पूजक एतद्वैपरीत्येन सर्वप्रियो धनी बुद्धिमांश्च जायत इत्याकूतम् । अत्र गणेशपूजाविमुखस्य विश्वामित्रत्वाद्यवाप्तिवर्णनात्मकशास्त्रसिद्धविरोधस्य श्लेषेण संसाराहितत्वाद्यर्थकथनेनाऽऽभासीकरणात् श्लेषोत्थापितो विरोधाभासालंकारः । 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति तल्लक्षणम् । यद्यपि उभयविधविश्वामित्रत्वाद्यवाप्तेरपि गणेशचर्णिपूजयाऽन्वयव्यतिरेकाभावाद्विरोधतत्समाधाने अपि नोपपद्येते, तथाऽपि लम्बोदरपदस्य विशेषवाचकस्याप्युपास्यसामान्यपरत्वमजहल्लक्षणालभ्यमादाय तदुपपत्तेरिति बोध्यम् ॥ ७० ॥

विराजेति । वयः पक्षिणः, तेषां राजा गरुडः, तस्य राजा स्वामी विष्णुः, तस्य पुत्रो मन्मथः, कृष्णाद्रुक्मिण्यां जातत्वात्, तस्य अरिः शत्रुः शिवः, तस्य स्मरहरत्वात्, तस्य, चत्वारि अक्षराणि यस्य तादृशं यद् नाम 'मृत्युञ्जय' इत्याकारकम्, अस्तीति शेषः । औचित्याद्राजन्नित्याध्याह्रियते । सङ्गरे युद्धे, पूर्वार्धं पूर्वभागः, मृत्युः, तस्य नाम्न इति सम्बन्धी प्रतिसन्धेयः, तव शत्रूणां रिपूणाम् । परार्धं उत्तरभागः, जयः, तव, भवतु इति शेषः । वाच्यवाचकयोरभेदमध्यवस्येयमुक्तिः । तव शत्रवः पराभवं यान्तु, आयुर्वर्धतामित्याशीर्वचनं कस्यचन विदग्धस्य । 'क्लिष्टत्वा'भिधो दोषोऽत्र न किञ्चित्करो दोषाङ्कुरत्वात् कूटत्वस्य ॥ ७१ ॥

स्तनमण्डलमाश्रित्य नखस्य वरयोषिताम्।
कदाऽऽकर्णयते गीतं रमया सह रङ्गराट् ॥ ७२ ॥
त्रैलोक्ये नोपमैतस्याः सखे किमिति भाषसे।
अनन्तरा साऽनादिर्वा न तृतीयेति मे मतिः ॥ ७३ ॥

---

स्तनेति। कं जलम्, ददातीति कदस्तत्सम्बुद्धौ हे कद मेघ ! 'आतोऽनुपसर्गे कः' इत्यनेन कप्रत्ययः, खस्य आकाशस्य, 'नभोन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः। मण्डलं देशम्, 'मण्डलं देशबिम्बयोरि'ति विश्वः। आश्रित्य आरुह्य, न मा, स्तन गर्ज, 'स्तनगदी देवशब्दे' इत्यस्माल्लोटो रूपम्। यतः, रङ्गे श्रीरङ्गाख्ये देशे राजते इति रङ्गराट् रङ्गराजः, क्विबन्तम्। विशिष्य श्रीवैष्णवानामुपास्यो विष्णुः। रमया लक्ष्म्या, सह, वरयोषितां उत्कृष्टाङ्गनानाम्, वारयोषितामिति पाठे गणिकानाम्, गीतं गानम्, सङ्गीतमिति यावत्। आकर्णयते शृणोति ॥ ७२ ॥

त्रैलोक्य इति। मित्रगोष्ठीसंलापपरं पद्यमिदम्। सखे मित्र, एतस्याः पुरोवर्तिन्याः सुन्दर्याः, 'समीपतरवर्तिन्येतदो रूपमि' त्युक्तत्वात्, त्रैलोक्ये त्रिभुवने, स्वार्थे ष्यञ्। न, उपमा सदृशी, इति किं भाषसे वदसि ? यतः सा पूर्वप्रकृता उपमा, न विद्यतेऽन्तरं मध्यम्, मध्यवर्णमिति भावः, यस्याः सा तथोक्ता उमा, 'उपमा' इत्यतो मध्यवर्णपकारापगमे 'उमा' इति सम्पद्यते। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि चे' त्यमरः। वाच्यवाचकयोरभेदोऽध्यवसितः। अग्रेऽप्येवम्। वा अथवा, सा उमा, तच्छब्दोऽनुभूतपरामर्शकोऽत्र ग्राह्यः, न तु प्रक्रान्तपरामर्शकः। न विद्यते आदिः आदिमो वर्णो 'उ'कारः, यस्यास्तादृशी मा लक्ष्मीः, अस्तीति शेषः। 'इन्दिरा लोकमाता मा' इत्यमरः। तृतीया उमालक्ष्म्यतिरिक्ता उपमा नेति मे मतिः विचारः। उपमेत्यत्र बाहुलकात्करणेऽङ् बोद्धव्यः ॥ ७३ ॥

निश्चितं स सुरः कोऽपि नकुलीनः समेमतिः ।
सर्वथाऽसुरसंबद्धं काव्यं यो नाभिनन्दति ॥ ७४ ॥
दिवसेश यः खलु शयः प्रतिकर्तुं

---

निश्चितमिति । यः, सर्वथा सर्वप्रकारेण, असुरैः दैत्यैः, सम्बद्धं सङ्गतम्, काव्यं शुक्राचार्यम्, 'शुक्रो दैत्यगुरुः काव्य' इत्यमरः, नाभिनन्दति नाद्रियते, सः शुक्रानभिनन्दकः, मया लक्ष्म्या, सह वर्तमानत्वात् विष्णुः समः, स च इः कामश्च समयौ, तयोः मतिर्यस्यैवम्भूतः, कण्ठेकालादिवदलुक्समासो वा, तदा 'इः' इत्यनपेक्षितम्, कौ पृथिव्याम्, 'गोत्रा कुः पृथिवी'त्यमरः, लीनः संलग्नः, स्थित इति यावत्, तथोक्तो न भवतीति नञर्थस्य नशब्दस्य नैकधेत्यादाविव 'सुप्सुपे'ति समासः । ईदृशः कोऽपि सुरः देवः, निश्चितं नूनमित्युत्प्रेक्षाव्यञ्जकम् । शत्रुगुरुमसम्मानयन् विपदि विष्णौ कामदेवे चाऽऽस्थां दधानोऽत्र-रित्रीस्थितः कोऽपि देव एवेति सम्भावना । किञ्च सर्वथा सुरसं समीचीन-शृङ्गारादिरसयुक्तम्, बद्धं ग्रथितम्, रचितमिति यावत् । काव्यं कविरचनाम्, यः नाभिनन्दति न प्रशंसति, सर्वथेत्येतदभिनन्दनक्रियाविशेषणं वा, सः, कोऽपि नकुलीनः असत्कुलप्रसूतः, 'कुलात्ख' इति खः, तस्य च 'आयनेयी-नीयियः' इत्यादिना 'ईन्' प्रत्ययः । निश्चितं नियमेन, सुरया मद्येन सह वर्तत इति ससुरः, सुरापानजविकारयुक्त इति यावत् । 'सुरा हलिप्रिया हाले'त्यमरः । इति मे मतिः सम्भावना, कविपक्षकयोजनायां 'स मे' इत्यत्र 'एतत्तदोः सुलोप' इत्यनेन सुलोपो बोध्यः । यः शृङ्गारादिरसयुक्तं सुसन्दब्धं काव्यं न सम्मन्यते स नूनं मद्यप इति भावः । काव्यलक्षणन्तु मम्मटभट्टानां 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इति, रसलक्षणन्तु तेषां सम्मतं भग्नावरणचिद्विशिष्टरत्यादिस्थायिभावत्वरूपम् । श्लेषोत्प्रेक्षालंकारयोः परस्परं नैरपेक्ष्यात्तिलतण्डुलवत् संसृष्टिः ॥ ७४ ॥

दिवसेति । सूर्यः कर्णाय कवचकुण्डले दत्वाऽऽगमिष्यते कपट्याचकाये-

धृतलालसो भवति नार्थिषु दैन्यम् ।
प्रतिपादयेत्स तु कथं पुरुषस्य प्रतिकूल-
वर्णनिजनामपदार्थम् ॥ ७५ ॥

गौरीक्षणं भूधरजाऽहिनाथः
पत्रं तृतीयं दयितोपवीतम् ।

---

न्द्रायैते नैव दातव्ये इति प्रतिषेधति, तदसहमान उदारः कर्णः पितरं सूर्यं दानमाहात्म्यं बोधयति । चम्पूभारतीयमिदं पद्यम् । हे दिवसेश भास्कर ! यः शयः पाणिः, 'पञ्चशाखः शयः पाणिरि'त्यमरः । अर्थिषु याचकेषु, सप्तम्यर्थो विषयत्वम्, 'मार्गणो याचकार्थिनावि'त्यमरः, दैन्यं दारिद्र्यम्, प्रतिकर्तुं वारयितुम्, धृता लालसा उत्कटेच्छा, येन तथोक्तो न भवति, 'सोऽत्यर्थे लालसा द्वयोः' इत्यमरः, स तु तादृशशयस्तु, प्रतिकूलौ विपरीतीकृतौ, वर्णौ शकारयकाररूपाक्षरौ यस्मिंस्तस्य निजनाम्नः पदस्य यशश्शब्दस्य, अर्थं कीर्तिम्, कथं केन प्रकारेण, प्रतिपादयेत् दद्यात्, 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनमि'त्यमरः । अदाता कदाऽपि कीर्तिं नाप्नुयादिति भावः । 'संग्रहैकपरस्तावत्समुद्रोऽपि रसातले । दातारं जलदं पश्य गर्जन्तं भुवनोपरि ॥' इति दातुः कीर्तिश्रवणात् । 'शयः' एव वैपरीत्येनोच्चारितो 'यशः' सम्पद्यते । सुमङ्गली वृत्तम्, 'सजसाः सगौ यदि सुमङ्गलिकेयम्' इति तल्लक्षणम् ॥ ७५ ॥

गौरीति । यस्य शिवस्येति सर्वत्रानुषज्यत इदम्, गौः वृषभो नन्दी, पत्रं रथः, 'पत्रं वाहनपक्षयोः' इत्यमरः । तृतीयं ईक्षणं लोचनम्, अस्तीति सर्वत्रानुषज्यते । त्रिलोचनत्वात् । दयिता कान्ता, भूधरजा पार्वती, अहिनाथः वासुकिः, उपवीतं ब्रह्मसूत्रम्, एवमेवामरः । अम्बरं वस्त्रम्, 'अम्बरं व्योम्नि वाससी'त्यमरः, काष्ठा दिक्, 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । द्वादशलोचन इत्याख्या व्यपदेशो यस्य स तथोक्तः, सुतः पुत्रः षडाननः, प्रत्या-

यस्याम्बरं द्वादशलोचनाख्यः काष्ठा

सुतः पातु सदाशिवो वः ॥ ७६ ॥

विकसति नयनाभ्यां कैरवं पङ्कजञ्च

श्लथयति चरणाम्बु ब्रह्मचर्यं पयोधेः ।

---

ननं नयनद्वयमिति षट्सु मुखेषु द्वादश नयनानि भवन्ति । स सदाशिवः शङ्करः, वः युष्मान्, पातु अवतु, शिवं कल्याणमस्यास्तीत्यर्श आद्यजन्तं शिवयतीति 'तत्करोति तदाचष्टे' इति एयन्तात्पचाद्यचि वा, शिवशब्दव्युत्पत्तिः। सर्वदा मङ्गलकरः, सदेति व्यस्तं क्रियाविशेषणं वा । इन्द्रवज्रा वृत्तम्, 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' ॥ ७६ ॥

विकसतीति । यस्य विष्णोः, नयनाभ्यां चन्द्रसूर्यरूपाभ्यां नेत्रस्थानीयाभ्याम्, कैरवं कुमुदपुष्पम्, पङ्कजं कमलम्, च विकसति उन्मीलति, यस्य चरणाम्बु गङ्गालक्षणं जलम्, पयोधेः समुद्रस्य, ब्रह्मचर्यं ब्रह्मणः व्रतस्य, चरणं चर्यम्, 'गदमदचरे'त्यादिना यत्प्रत्ययः । अविवाहितत्वरूपं श्लथयति शिथिलयति, समुद्रगङ्गयोः पतिपत्नीत्वं सादृश्यसिद्धं कविसमयप्रसिद्धञ्च । यस्य, उरसि वक्षसि, श्रेयसां कल्याणानाम्, सम्प्रदायः परम्पराप्रवर्तकः तदभिन्नत्वेना ध्यवसितः कौस्तुभः, लसति शोभते । स ईदृग्गुणविशिष्टः, पद्मं नाभौ यस्य स तथोक्तः, 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्र 'अच्' इति योगो विभज्यते, तथा चान्यत्रापि समासान्तोऽच् , इत्यच्प्रत्ययः । मुकुटस्तु योगविभागस्य हि पूर्वाचार्येष्टमात्रसाधकत्वम्, न तु नाभ्यन्तस्य सर्वत्रैवाच्समासान्त इति नियमः, तथा च 'प्रजा इवाङ्गादरविन्दनाभेः' इति माघप्रयोगं प्रत्युदाजहार । अन्ये तु माघप्रयोगः समासान्तविधिमात्रस्यानित्यत्वाभ्युपगमात्सुसमाध इति योगविभागसिद्धाचः क्वाचित्कत्वमशङ्क्यमित्यभिप्रयन्ति । पद्मया लक्ष्म्या, सह विनाऽपि सहयोगे तृतीया 'वृद्धो यूना' इति निर्देशलभ्या । फणिनं शेषम्,

उरसि लसति यस्य श्रेयसां सम्प्रदायः स

फणिनमधिशेते पद्मया पद्मनाभः ॥ ७७ ॥

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।

---

अधिशेते स्वपिति, 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मसंज्ञा । मालिनी-वृत्तम्, 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणम् । अहो विधि-दुर्विलसितं यद् यस्य चन्द्रसूर्यात्मके नयने, चरणक्षालितं जलं गङ्गा, वक्षसि सर्वकामधुक् कौस्तुभमणिः, ईदृशालौकिसामर्थ्यशाली साक्षाल्लक्ष्म्या सह सर्पे शेते—इति ॥ ७७ ॥

दृढतरेति । दृढतरं प्रबलतया —निबद्धो निगृहीतः निबिडीकृतश्च, मुष्टिः बद्धपाणिः त्सरुश्च, 'मुष्टिर्द्वयोः फले । बद्धपाणौ त्सरौ' इति मेदिनी । कृपणपक्षे धनव्ययवैमुख्येन मुष्टिशिथिलीकरणाभावात्, खड्गपक्षे तु प्रसिद्ध एव तन्मूलभागस्य गाढश्लिष्टत्वात् । कोशे धनागारे खड्गपिधानके च, 'म्यान' इति भाषाप्रसिद्धे । 'कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।' इत्यमरः । अयं शब्दो दिव्ये = शपथे, शब्दादिसंग्रहे = अमरादौ, तालव्या-न्तोऽपि । प्रायिको मूर्धन्यान्तः, कुश-निष्कर्षे इत्यस्मात् कर्मणि घञ् ततश्च लघूपधगुणः । निषण्णस्य समासीनस्य, धनरक्षार्थं स्वस्थानत्वाच्च । सहजमलिनस्य प्रकृत्या मलीमसस्य, मलिनपदं मालिन्यपरम् । उभयत्रेदम्, ईदृशस्य कृपणस्य कदर्यस्य, 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः' इत्यमरः। कृप्यते कृपाविषयीक्रियते कृपू-सामर्थ्ये इत्यस्माद् बाहुलकात्क्युन्, कृपाणस्य खड्गस्य, कृपां नुदति इति, 'अन्येभ्योऽपि दृश्यते' इत्यनेन डः, 'पूर्वपदा-त्संज्ञायामि'ति णत्वम् । च केवलं आकारतः, आकृतिमात्रेण करचरणादि-मनुष्यावयवसत्त्वासत्त्वप्रयुक्तः, तथा 'आ' कारमात्रेण कृपण-कृपाणशब्दयो-राकारप्रयुक्त एव भेदः । अन्यत् सर्वं दृढतरनिबद्धमुष्टित्वादिकमविशिष्टमेव ।

कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ ७८ ॥
उपरिगतं हि सवर्णं हृत्वा करतो ददासि रन्तुं मे ।
धन्यः सरोजयुगलं त्यक्त्वा स्तनमस्पृशत् कृष्णः ॥ ७९ ॥
मधौ मन्दं मन्दं मरुति शिशिरे वाति रुचिरे

---

यद्यपि दृढतरबद्धमुष्ट्यादिकं कृपणगतं कृपाणगतञ्च स्वरूपतो नैकविधम्, तथाऽपि तस्य बिम्बप्रतिबिम्बभावापन्नतया साधारणधर्मताऽऽलंकारिकसमयसिद्धा। वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्यालंकारिकसमयः ॥ ७८ ॥

उपरीति । नर्मविस्रम्भालापे कृष्णो राधिकां विशिष्टं सरोजमर्थयते—उपरि गतं ऊर्ध्वभागे स्थितम्, करतः करेण, सार्वविभक्तिकस्तसिः । सवर्णं सदृशरागं सदृशप्रशंसायुक्तं वा, 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाऽक्षरे' इत्यमरः । 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णे'त्यादिना समानस्य सादेशः । सरोजं हृत्वा आनीय, रन्तुं क्रीडितुम्, ददासि वितरसि ? काकुः प्रश्नद्योतिका । इदमाकर्ण्य राधाऽऽर्जवेन तत्कमलं दातुं प्रवर्तते, तदा कृष्णोऽन्यदेव पृष्टमन्यदेव दास्यसीति प्रणयकोपं प्रकटयन् तद् निरस्यति, 'उ'परिगतं उकारयुक्तम्, सवर्णं 'स'कारम्, हृत्वा निस्सार्य, करतः हस्ते, ददासीति मम याञ्चा, तद्धि पुष्पात्मकं सरोजयुगलं न भवितुमर्हति; अपि तु उरोजयुगलं स्तनयुग्मम्, इति तत्सरोजद्वयं परिहृत्य स्तनमेव अस्पृशत् जग्राह, ईदृशः कृष्णः धन्यः । स्वामीप्सितकार्यस्य कौशलेन सम्पादितत्वात् कृतकृत्यः । पर्यायोक्तमलंकारः, 'पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम्' इति तल्लक्षणात् । 'स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण' इत्यत्र प्रायग्रहणात्क्वचिदेकवचनमपि न विरुध्यते । तथा च श्रीहर्षः—'तरुणीस्तन एव शोभते' इति ॥ ७९ ॥

मधाविति । मधौ चैत्रमासे, वसन्त इति यावत्, 'स्याच्चैत्रे चैत्रिको मधुः' इत्यमरः, शिशिरे शीतले रुचिरे मनोहरे मरुति पवने, मन्दं मन्दं

कुलस्त्रीभिः कृष्णे विहरति तथा वृष्णिनिकरे ।
उषा योषा तोषाद्वदनमनिरुद्धस्य मिषतः पुरः
पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ८० ॥

---

शनैः शनैः, 'नित्यवीप्सयोरि'ति द्विर्भावः, वाति सति प्रवहति सतीति शतृ रूपम्, कुलस्त्रीभिः गोकुलवनिताभिरिति व्यासादिवत् नामैकदेशग्रहणम्, सह, कृष्णे तथा एवं वृष्णिनिकरे यादवसमूहे, 'स्तोमौघनिकरे'त्यमरः । विहरति सति नर्मविहारं कुर्वति सति, सती साध्वी, एवममरः । योषा इयं उषा उषाभिधाना पत्नी, 'अनिरुद्ध उषापतिः' इत्यमरः । इदम्पदं बुद्धिस्थपरामर्शकम्, सर्वनाम्नां बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने शक्तत्वात् । वदनं मुखम्, अर्थादुषायाः, मिषतः पश्यतः, पत्युः भर्तुरनिरुद्धस्य, पुरः समक्षम्, 'षष्ठी चानादर' इति षष्ठी, पश्यन्तमनिरुद्धमनादृत्येति भावः । श्वशुरं भर्तुर्जनकम्, 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः । कामात् अभिलाषात्, आलिङ्गति आश्लिषति । साध्वी कथं गुरुस्थानीयं पत्युः पितरं आलिङ्गति ? तच्च पत्युः पुरस्तादेव इति चेत् श्वशुरः प्रकृते कामः, तस्यैव पत्युः पितृत्वात् । प्रद्युम्नपुत्रो नन्वनिरुद्धः । देशकालगोष्ठ्यादिप्रबलोद्दीपनविभावविभववशंवदा उषाऽपि कामविकृतिमङ्गीकृतवतीति भावः । चरमचरणं चित्रसमस्यारूपम् ॥ ८० ॥

दयालवालाः सुधियः स्खालित्यं मे प्रमादजम् ।
क्षाम्यन्तु स्थूललक्षान्ता आर्जवेन कृतोऽञ्जलिः ॥
व्याख्यद् जितेन्द्रियाचार्यः कूटमुच्चित्य संग्रहात् ।
तथाऽऽर्पयद् वासुदेवे 'यत्करोषी'ति शासनात् ॥

॥ इति श्रीजितेन्द्रियाचार्यविरचिता 'दर्पणा' स्व्यन्व्याख्या समाप्ता ॥

---

# कुम्भ-पर्व-माहात्म्य

लेखक—वेदाचार्य पं० श्रीवेणीराम शर्मा गौड़, काशी

हिन्दू-समाज में 'कुम्भ-पर्व' का विशेष महत्त्व है। किन्तु कुंभ-पर्व के वास्तविक उद्देश्य और महत्त्वादि से परिचित इनेगिने लोग दिखाई देते हैं। अतः सर्वसाधारण को कुंभ-पर्व के रहस्य को अवगत कराने के लिए लेखक महोदय ने इस पुस्तक में कुंभ-विषय के उन आवश्यक अप्राप्य विषयों का संकलन किया है, जिनका ज्ञान हिन्दू मात्र के लिए परमावश्यक है। अद्यावधि कुंभ के संबन्ध में सप्रमाण पुस्तक नहीं निकली थी। यह पुस्तक प्रत्येक संस्कृतानुरागी के लिए और खास कर साधु, संन्यासी, सन्त महात्मा एवं मण्डलेश्वरों के लिए विशेष उपयोगी है। इसमें भूमिका भी मूल पुस्तक से कम महत्त्व की नहीं है।

इस पुस्तक में चुने हुए २३ निम्नलिखित विषय हैं—

कुंभ शब्दार्थ, कुंभ का स्वरूप, कुंभ प्रार्थना के मन्त्र, वेदों में कुंभ पर्व का वर्णन, कुंभ पर्व या कुंभोत्पत्ति की कथा, कुंभ पर्व का उद्देश्य, कुंभ पर्व का आध्यात्मिक रहस्य, कुंभ पर्व के प्रवर्तक, पूर्ण कुंभ और अर्ध कुंभ, कुंभ पर्व के चार तीर्थ स्थान, चारों कुंभों के पर्व दिन और स्नान दिन, कुंभ स्नान का महत्व, कुंभ मेला, कुंभ में हमारा कर्तव्य, कुंभ और साधु-समाज, कुंभ-सम्बन्ध में अनेक दन्त कथाएँ, धार्मिक जगत् और कुंभ, कुंभ-पर्व में घृतपूर्ण कुंभ दानादि का महत्त्व, कुंभ स्नान की विधि, हरिद्वार, प्रयाग, उज्जैन और नासिक इन चारों तीर्थों का माहात्म्य।

२००४ में प्रयागमें होनेवाले अर्ध कुंभीके अवसरपर ही इस पुस्तक की काफी खपत हो चुकी है, थोड़ी ही बची है अतः ग्राहकों को पुस्तक मंगाने की शीघ्रता करनी चाहिये अन्यथा पछताना पड़ेगा। पुस्तक की छपाई सफाई दिव्य होने पर भी पुस्तक का मूल्य लागत मात्र ।।) आना रक्खा गया है।

सर्वविध पुस्तक प्राप्तिस्थान—व्यास पुस्तकालय, मानमन्दिर, काशी।

# शिवराज-विजयः

महामहोपाध्याय पं० श्री गोपीनाथ कविराज एम० ए०
महोदय की शुभ-सम्मति

महामहोपाध्याय
गोपीनाथ कविराज एम० ए०

२ ए सिगरा,
बनारस
ता० २६-३-४६

परलोकगत पं० अम्बिकादत्तजी व्यास प्रणीत 'शिवराज-विजय' नामक ग्रन्थ के नूतन संस्करण का अवलोकन मैंने विशेष ध्यानपूर्वक किया है। संस्कृत का यह विख्यात ऐतिहासिक गद्यकाव्य महाराष्ट्र वीरकेशरी शिवाजी महाराज के चरित के आधार पर, अलङ्कारमयी तथा प्रसादमयी शैली में लिखा गया है। ग्रन्थ प्रणेता अग्रगण्य धर्मप्रचारक थे और आपने हिन्दी व्याख्यानों के कारण सारे भारत में आपकी अनुपम वाग्मिता का यश विख्यात था। परन्तु इस ग्रन्थ से प्रकट होता है कि संस्कृत के भी आप निसर्गतः निपुण लेखक थे। यह ग्रन्थ यद्यपि अर्वाचीन है तथापि संस्कृत साहित्य में यह चिरस्थायी स्थान प्राप्त करने योग्य है। आशा की जाती है कि संस्कृत के अध्ययन में तथा संस्कृत रचना-कला में प्रवृत्त विद्यार्थीवर्ग इस ग्रन्थ को अपना उपयोगी सहायक बना इसका गुण प्रकर्ष स्वीकार करेगा।

—गोपीनाथ कविराज